एकारं मुनिवृंदसेवित ॥ भ्रात्रादिसल्लक्षणलक्षितं क्षिता—वानंदसंदोहकरं सुधामयं ॥ ५ ॥ इति द्वितीयातत्रिभक्तिकाव्यत्रिक ॥ शालिनी छंद ॥ प्राज्य राज्यं चक्रवर्तित्वमग्र,त्यक्त्वा दत्वा स्वर्णरूप्यादिदान ॥ श्रुत्वा वाक्य ब्रह्मलोकातिकाना, येनावास संयमं मुक्तियोग्य ॥ ६ ॥ द्रुतविलंबित छंद ॥ अमितपुण्यवता जनतावता, कुगतिवारणतत्परसद्गिरा ॥ नतनराम-रकिन्नरशालिना, जगवता भुवि शर्मविधायिना ॥ ७ ॥ इति तृतीयातविभक्ति काव्यछय ॥ इन्द्रवज्रा छंद ॥ श्रीशांतिदेवाय नमोऽस्तु नेत्रे, निर्नोपहर्त्रे शिवमार्गदात्रे ॥ चक्राकहृ-स्ताय समस्तभर्त्रे, शखेंदुहारोज्ज्वलशुभ्रकर्त्रे ॥ ८ ॥ रथोद्धता छंद ॥ दर्शनामृतनिलीनजतये, विश्वशास्त्रनयनीतिहेतवे ॥ लोकसागरसुवेलसेतवे, छापरावलितमिस्रभानवे ॥९॥ इति चतुर्थीविभक्तिकाव्ययुग्म ॥ उपेंद्रवज्रा छंद ॥ अघानि नश्यंति पुराकृतानि, प्रशस्त नाम्नातिशयप्रसत्ते. ॥ अनेकससारनिबंधितानि, प्रगाढबंधस्थितिसंचितानि ॥ १० ॥ मालिनि छंद ॥ भवति सुखमनत शांतिनाथप्रसादा-च्छरिणशरणदातुर्विश्वसेनागजातात् ॥ नतभविकजनाना प्रीतिराजात्प्रकाम, निरवधिजिनरागे लग्नसन्मानमाना ॥ ११ ॥ इति पंचमातविभक्तिकाव्यछयं ॥ शिखरिणी छंद ॥ सदाध्यान शांतेरखिलगुणधाम्न शुभवतो, धरंति श्रीकार सुमतिमतिकार भयहर ॥ नरा भव्या शक्त्या विगतमदतन्द्रा श्रुतपरा—स्त्रिमध्य सद्ध्यान प्रबलतरभाग्योदयमत. ॥ १२ ॥ विद्युन्माला छंद ॥ शांते शांते पाद-छन्छं, नत्वा नत्वा सश्रीका. स्यु ॥ भो भो श्राद्धा आयुष्मत—स्तुष्ट्यानंद कृत्वा कृत्वा ॥१३॥ इति षष्ठि विभक्तिकाव्यद्विकं॥ वसंत तिलका छंद ॥ चेतोऽस्ति चेद्भवपयोनिधिपार-मासे, तीर्थंकरे जिनपतौ किल शांतिदेवे ॥ भक्तिं कुरुष्व सतत विपुलामुदारा, हत्वा प्रमा-दमपि कर्मविशेषजन्य ॥ १४ ॥ दोधक छंद ॥ दुर्गतिसागरपीतसमुद्रे, निश्चलसंयमपावन-मेरौ ॥ शारदशुभ्रसुधाकरवक्रं, शाश्वमानिरंजनचित्ते ॥ १५ ॥ नाराच छंद ॥ कार-ण्यरगरजिते, कार्पण्यदोषवर्जिते ॥ देवाधिपेऽचिरासुते, लोकोपकारकर्मठे ॥ १६ ॥ इति सप्तमीविभक्तिकाव्यत्रिकं ॥ वंशस्थ छंद. ॥ स्वकीयवशाम्बरभास्करप्रभो, विशालगंगाजल-शुभ्रकीर्ते ॥ अपारसंसारभयाच्च सत्वरं, कृपापरस्त्वं परिरक्ष मेवकान् ॥ १७ ॥ इति संबो-धन विभक्ति काव्यमेक ॥ मंदाक्रांता छंद ॥ कल्याणोरुक कुशलजननं सर्वगपस्य नित्यं, नानावृत्तै प्रकलितमिदं स्तोत्रमेतन्त्रिकालम् ॥ मुक्त्वाऽऽलस्य भणति मनुजो भाविना भावितात्मा, गेहे लक्ष्मीर्भवति दृढता तस्य दीर्घायुषश्च ॥ १८ ॥ शार्दूलविक्रीडित छंद ॥ कल्याणोदधिनन्दन कलिदर काशल्यमालास्पद, सौभाग्यांधकर विभक्तिकलित कार्यर्वि-निर्मं परं ॥ श्रीशांते स्तवनं पठंति भविनं सत्पुण्यपण्यालया—स्तेषां धाम्नि शुभे निरा-ममतुला' कुर्वंति सपत्तय ॥ १९ ॥ इति ॥

## ॥ अथ श्री अंतरिक्षपार्श्व स्तवन प्रारंभ ॥

इन्द्रवज्रा छंद ॥ विश्वेश्वरं विश्वजनेशपूज्यं, सर्वार्थनिष्पादनकामधुन ॥ सल्याविमर्नं महिमांपलक्ष्म्या, पार्श्वं भजे मंस्थितमंतरिक्ष ॥ १ ॥ कल्याणमालागृहमंदिर—विद्याधरा-धीशगुताप्रिपद्म ॥ सर्वत्र राष्ट्रेषु विशालकीर्ति, पार्श्वं भजे संस्थितमंतरिक्षं ॥ २ ॥ गंगा-धिपिंतार्तिसमूहताप—संपद्यमायाधविचारमूर्ति ॥ सन्नीरसदृशपिवत्रगात्रं, पार्श्व० ॥३॥

संसारसिंधौ वरयानपात्रं, मुक्त्यंगनासक्तहृदं शरण्यं ॥ वामांगजातं जगतीप्रदीपं, पार्श्व० ॥ ४ ॥ श्रीपार्श्वयक्षाधिपमद्वितीयं, श्रीशालिनं सेरपुरावतंसं ॥ वाचासुधाकर्पितसन्यलोकं, पार्श्व० ॥ ५ ॥ त्रैलोक्यकोटीरमनाथनाथं, दारिद्र्यवातादिमनंतशक्तिं ॥ शास्त्रार्थनैपुण्यनिधिं दयालुं, पार्श्व० ॥ ६ ॥ पद्मावतीसेवितपादयुग्म–मंहोन्नरध्वांतदिनेशमाशु ॥ लावण्यसौन्नाग्ययशोन्निराढ्यं, पार्श्व० ॥ ७ ॥ ज्ञानादिधर्मान्नरणं वरेण्यं, सद्बोधदानादिकमार्गपांथं ॥ आनंदवल्लीततिवारिधारं, पार्श्व० ॥ ८ ॥ कलशः ॥ स्रग्धराछंदः ॥ इत्थं ये देववंद्यं विविधसुखकरं चांतरिक्षाख्यपार्श्वं, नित्यं ध्यायंति नक्त्या हृदयरतिगुजो नाग्यवंतो नरोऽपि ॥ लक्ष्मीस्तेषांनिकाय्ये, वसति दृढतया सर्वदा कामकर्त्री, कल्याणश्रेणिकर्तुर्भुवि विदिततरा सर्वसंपत्तिकांता ॥ ए ॥ इति ॥

## ॥ अथ श्रीगौडिकपार्श्वाष्टक प्रारंन ॥

शार्दूलविक्रीडित छंदः ॥ वामेयं मरुदेशन्नूषणतरं श्रीपार्श्वयक्षार्चितं, कल्याणावलिवल्लीसिंचनघनं श्रीइक्ष्वाकुवंशोद्भवं ॥ आराष्ट्रसमागतैर्नरवरैः संसेवितं नित्यशः, श्रीमल्लीकरगौडिकान्निधधरं पार्श्वं सुपार्श्वं नजे ॥ १ ॥ नानासाधुजनौघपंकजवने मार्तंडबिंबायितं, विघ्नव्यूहनिवारकं कलियुगे प्राप्तप्रतापालयं ॥ विश्वस्यां प्रथितावदाननिकरं निर्दोषपुण्योज्ज्वलं, श्रीमल्लीकरगौडिकान्निधधरं पार्श्वं सुपार्श्वं नजे ॥ २ ॥ संपत्श्रेणिसुदानकामकलशं त्रैलोक्यचिंतामणिं, सद्वाचामृतरंजितामरनरं सद्धर्मबोधप्रदं ॥ सौन्नाग्याद्भुतकांतकीर्त्तियशसा संपूरिताशांतरं, श्रीमल्ली० ॥ ३ ॥ मार्गे चांतरन्नीतिवारिनिचिते क्षेमंकरं सर्वदा, दारिद्र्याद्रिनिपातनात्तकुलिशं चिंतार्त्तिरोगापहं ॥ दुःखत्राससमीरणौघनुजगं नागांकमंहोमथं, श्रीमल्ली०॥४॥ कारुण्यांचितचारुचित्तकमलं सत्वेषु संसारिषु, सद्धैर्यादिगुणैरलंकृततनुं लावण्यलीलास्पदं ॥ ॥ संसारार्णवपीतवारिधिसमं मुक्त्यंगनावल्लनं, श्रीमल्ली० ॥ ५ ॥ त्रैलोक्ये तिलकायितं निरुपमं नव्यैर्नृन्निःपूजितं, दुष्टानां निजसत्वदर्शनपरं क्षिप्रं सतां कामदं ॥ नाम्नाध्वस्तसमस्तवैरिनिचयं राद्धांतनिर्देशकं, श्रीमल्ली० ॥ ६ ॥ नूयिष्टामलनक्तिशक्तिकलितैर्देवैश्चतुर्धानतं, सर्वाशाकरणैककल्पफलदं सर्वांगिचूडामणिं ॥ शिष्टानंतचतुष्टयीवरतरं श्रीमेरुतुंगं जिनं, श्रीमल्ली० ॥ ७ ॥ स्फाराकारनिराजितांगमतुलं सद्वर्ण्यहेमाकरं, विश्वव्याप्ततरं प्रवाससदनं गंन्नीरतासागरं ॥ न्नासोद्योतितविश्वविश्वमवनौ कल्याणसिंधौ विधुं, श्रीमल्ली० ॥ ८ ॥ अष्टन्निः कुलकं ॥ अनुष्टुप छंदः ॥ नित्नमाले सदा श्रेष्ठे, गुणवल्लव्दन्नूपिते ॥ पुष्पमालेऽतरान्निख्ये–ऽनेकवीहारसंयुते ॥ ए ॥ श्रीमतः पार्श्वनाथस्य, स्तवनं जगतोऽवनं ॥ कल्याणसागराधीशैः, सूरिन्नी रचितं मुदा ॥ १० ॥ स्रग्धछंदः॥ ध्येयं श्रीपार्श्वदेवं नजत किल जना गोडिकग्रामराजं, शश्वत्सर्वार्थसिद्ध्यै विहितशुन्नहितं विष्टपे चैत्रपूर्वे ॥ सानंदोल्लासलष्टाः कुशलगविबुधाः सर्वलोके विशिष्टा, निर्दोषाचारपुष्टा जिनपतिषु रता आप्तकल्याणतुष्टाः ॥ ११ ॥ इति ॥

## ॥ अथ श्रीगोडीपार्श्वनाथस्तवन प्रारंन्नः ॥

मालिनी छंदः ॥ जयति जगति चंद्रः पार्श्वनामा जिनेंद्रो, विकचकमलदृष्टयानंदितामर्त्यमर्त्यः ॥ अकलितमहिमौघस्तीर्णसंसारसिंधु—र्नुजगकलितपादः पुण्यपीयूषपुष्टः ॥१॥

स्रग्धरा छंदः ॥ श्रीपार्श्वं गौडिकाख्यं भजत भविगणे कल्पवृक्षं सुगोत्रं, नानादेशेषु लब्धातिशयमहितताम्बूहवारं सुमूर्तिं ॥ श्रीमत नीलरत्नाधिकतरवपुषं स्फारलावण्यशालं, मोहाम्भोराशिकुंभोद्भवममरनुतं पार्श्वयक्षार्चितांघ्रिं ॥ २ ॥ पचचामर छंदः ॥ नमंति पार्श्वमंगिनो नरालसा, धृतातपत्रचामरैः सुरैःस्तुतं ॥ अनलशक्तिमालिनं गतामयं, विवेकरत्नरोहणं दयाकरं ॥ ३ ॥ वसंततिलका छंदः ॥ भरीकृतं व्रतमनुत्तरमंगिनेत्रा, दत्वाऽशुभेन वरवार्षिकदानराशिं ॥ वामोद्भवेन मुनिनायकनायकेन, कल्याणकेलिनिलयेन शुभाशयेन ॥ ४ ॥ द्रुतविलंबित छंदः ॥ मम नमोऽस्त्वभवते परमात्मने, भगवते शिवशर्मविधायिने ॥ अमितशौर्यतिरस्कृतभैरवे, शुभदशेरकमंकलमौलये ॥ ५ ॥ हरिणी छंद ॥ अमृतरसताधिक्याभीष्टाम्बरोत्तमसंगता-भुवनसुभगालार्श्वाभिख्याह्निनस्यति पातकं ॥ प्रसरति च वै कीर्त्तिर्दिक्षु प्रसूनवदुज्ज्वला, प्रभवति पुनः शीघ्रं लीलाजयोन्नतिवर्द्धनं ॥ ६ ॥ शार्दूलविक्रीडित छंदः ॥ आकृत्यानरदेवदेवमनुपा संतुष्टिकर्तुस्सदा, चेतोवल्लभकामसार्थं ददतः कर्मारिहर्तुर्भृशं ॥ आनंदौघसरःप्रवृद्धिकरणे पानीयदालुर्मुदा, पार्श्वस्यास्ति नतिः समृद्धिजननी कल्याणविस्तारिणी ॥ ७ ॥ तोटक छंदः ॥ नरलक्षणभूषितवह्युपुरे, भुवनीरजरंजितविश्वजने ॥ श्रुतदेशनदर्शितधर्मपथे, जिननेतरि तिष्ठति भाग्यरमा ॥ ८ ॥ भुजंगप्रयात छंदः ॥ सुराधीशचक्रैः स्तुतः ज्ञानसिंधो, जगन्नाथ नेतः कृपालोकबंधो ॥ विभो पाहि मां सर्वदा भक्तिभाजं, स्मरंतं चिरं त्वत्पदांभोजभृंग ॥ ९ ॥ शार्दूलविक्रीडित छंद ॥ स्तोत्रं पार्श्वजिनेश्वरस्य सततं ये प्राणिनो भावतः, सद्भक्त्यापि पठंति हृद्यमनसस्तेषां गृहे संपदः ॥ स्युर्नित्यं स्थिरभावशोभनतरा धर्मार्थनिष्पादिका, कल्याणार्णवसूरिभिर्विरचितं मांगल्यमालाकरं ॥ १० ॥ शिखरिणी छंद ॥ सदा धार्यं चित्ते स्तवनमनवद्यं भयहरं, नरैर्नूनं सिद्ध्यै कुशलवनराजौ घननिभं ॥ अवंध्य भक्तानां जिनगुणरतानां स्मृतिमतां, समेषां भव्यानां प्रमुदकरणं कामितकरं ॥ ११ ॥ इति ॥

## ॥ अथ श्रीदादापार्श्वनाथस्तवन प्रारंभः ॥

इन्द्रवज्रा छंदः ॥ कल्याणगेहं गुणरत्नराजं, सद्देहकांत्याजितनीलरत्नं ॥ स्तोष्ये मुदाशंकरमंगिवंद्यं, दादाभिधं श्रीवरपार्श्वनाथं ॥ १ ॥ सद्धर्मलीनाशयमाशु विज्ञ, कर्माष्टदावानलवारिधारं ॥ संसारपाथोनिधिकर्णधारं, दादाभिधं श्रीवरपार्श्वनाथं ॥ २ ॥ आचारवल्लीततिवृद्धिनीरं, सत्कीर्तिपुष्पद्रुतवासिताशं ॥ नानार्थराद्धांतविचारदक्षं, दादा० ॥ ३ ॥ वैराग्यरंगार्पितचारुचित्तं, सद्बोधिदातारमनीहसेव्यं ॥ नागेंद्रसंसेवितपादपद्मं, दादा० ॥४॥ त्रैलोक्यचूडामणिमृद्धिशोभं, सौभाग्यभाग्यावलिपूर्णदेहं ॥ भव्यौघराजीवदिनेशमेकं, दादा०॥५॥ सर्वांगिनेतारमभीष्टवाचं, विश्वेश्वरं रंजितसभ्यलोकं ॥ लोकार्तिचिंतामयदुःखवारं, दादा० ॥ ६ ॥ हृद्याकृतिं कृत्तजराधिदोषं, नरामरेंद्रैः स्तुतमर्त्यसंघं ॥ सन्नागचिह्नं कुशलार्थकारं, दादा० ॥ ७ ॥ सर्वत्रविख्याततरप्रतापं, कारुण्यसत्रं भुविशिष्टगोत्रं ॥ अज्ञानमिथ्यात्वतमिस्रदीपं, दादा० ॥ ८ ॥ अष्टभि कुलकं ॥ शार्दूलविक्रीडित छंद ॥ श्रीमद्भीषटपद्रभद्रनगरे शृंगारहारोपमं, कल्याणाभुजभानुचंद्रमसमं वामांगजातं परं ॥ दादाख्यं

जिनपार्श्वदेवमनघं ध्यायंति ये नित्यश–स्तेषां धाम्नि रमानिवासमनिशं कुर्वंति कल्याणतः ॥ ए ॥ इति ॥

## ॥ अथ श्रीकलिकुंडपार्श्वाष्टक प्रारंभः ॥

विबुधादिराजैर्नतपादपद्मं, बहुभाग्यसौभाग्यलतौघमेघं ॥ कमठोपसर्गाचलधैर्यभित्तिं, कलिकुंरुपार्श्वं सुचिरं भजेऽहं ॥ १ ॥ कमलाप्रदाने हरिचंदनांगं, सपयोधिदेशाद्भुतलब्धकीर्तिं ॥ रुचिराकृतौ रंजितविश्वविश्वं, कलिकुंरुपार्श्वं सुचिरं भजेऽहं ॥ २ ॥ महिमावदातोत्तमनाममंत्रं, समताभिरामं कमलाभिनेत्रं ॥ अभिलापदं सिद्धिविलासयंत्रं, कलिकुंरु० ॥ ३ ॥ दुरितांधकारारुणसन्निकाशं, करुणाशयं दुःखवनेषु दावं ॥ नरदेवपूज्यं सुखदं सुमूर्तिं, कलिकुंरु० ॥ ४ ॥ कनकादिदातारमनंतशक्तिं, वरनीलरत्नाधिकदेहवर्णं ॥ शिवशर्मराजं जनताभिवंद्यं, कलिकुंरु ॥ ५ ॥ अनघं सदासद्गुणकेलिपालं, शुभलक्षणालंकृतवर्यगात्रं ॥ कुलभूषणं शत्रुतृणौघदात्रं, कलिकुंरु० ॥ ६ ॥ जगतीश्वरं कर्मविमुक्तसंगं, विषमायुधालग्नमनःस्वरूपं ॥ धरणेंद्रपार्श्वार्चितपादयुग्मं, कलिकुंरु० ॥ ७ ॥ शुभसिंधुवृद्धौ शशिनं वरेण्यं, वचसा सुधाभेन सहर्षसभ्यं ॥ श्रुतसूरिणं पुण्यविराजमानं, कलिकुंरु० ॥ ८ ॥अष्टभिः कुलकं ॥ इंद्रवज्रा छंदः ॥ एवं स्तुतः श्रीकलिकुंरुपार्श्वः,कल्याणनाम्ना मयका नितांतं ॥ ये प्राणिनः स्तोत्रमिदं पठंति, तद्धाम्नि लक्ष्मीर्विलसत्यवश्यं ॥ ए ॥ इति ॥

## ॥ अथश्रीरावणपार्श्वाष्टक प्रारंभः ॥

इंद्रवज्रा छंदः ॥ देवाधिदेवं कृतपार्श्वसेवं, नागाधिराजेन नतांह्रिपद्मं ॥ पद्मावतीसंस्तुतनामधेयं, सेवे सदा रावणपार्श्वनाथं ॥ १ ॥ आनंदकंदोदयवृद्धिमेघं, मेघध्वनिध्वानविशेषराजं ॥ जितारिवृंदं विगताधिमोहं, सेवे सदा रावणपार्श्वनाथं ॥ २ ॥ वामांगजातं कुलनंदिकारं, ध्वस्तोपसर्गोत्कटदुष्टरोगं ॥ प्रख्यातिमंतं भुवने प्रभावैः, सेवे सदा० ॥ ३ ॥ सन्नीलभासा हसितेंद्रनीलं, सत्कांतकांत्या रमणीयरूपं ॥ प्रावीण्यनानातिशयैः प्रधानं, सेवे सदा० ॥ ४ ॥ संभीतिहर्तारमनंतसौख्यं, विश्वेश्वरं द्योतितविश्वलोकं ॥ पद्मार्थदाने सुररत्नवृक्षं, सेवे सदा० ॥ ५ ॥ अज्ञानमिथ्यात्वतमिस्रभानुं, भामंरुलालंकृतमौलिपृष्टं ॥ वाणीसुधामोदितसभ्यसंघं, सेवे सदा० ॥ ६ ॥ कौशल्यमांगल्यनिवासगेहं, पूर्णीकृताभीष्टपदार्थराशिं ॥ त्रैलोक्यदीपं वरसिद्धिभाजं, सेवे सदा० ॥ ७ ॥ संसाररत्नाकरयानपात्रं, निःशेषदोषोज्झितधर्ममार्गं ॥ आदेयसौभाग्ययशःसुपात्रं, सेवे सदा० ॥ ८ ॥ अष्टभिः कुलकं ॥ मालिनी छंदः ॥ अलवरपुररत्नं रावणं पार्श्वदेवं, प्रणतशुभसमुद्रं कामदं देवदेवं ॥ अमितगुणनिधाना ये नरः संस्तुवंति, जगति विदितसारा भाग्यवंतो भवंति ॥ ए ॥ इति

## ॥ अथ श्रीगोडीपुरपार्श्वजिनस्तवन प्रारंभः॥

॥ रागेण गीयते ॥ गौडिपुरप्रभुपार्श्वममंदं ॥ दर्शनदर्शनपरमानंदं ॥ नमितसुरासुरवृंदं ॥ १ ॥ श्रीजिनशासनचारुशृंगारं ॥ अंतरंगरिपुवृंदकुगारं ॥ सकलजगदाधारं ॥ २ ॥ निरूपमरूपविराजितदेहं ॥ विदलितनानाजनसंदेहं ॥ अमितगुणधनगेहं ॥ ३ ॥ दुरितकाननभेदनदात्रं ॥ रुचिरलक्षणविभूषितगात्रं ॥ वारितकुमतकुपात्रं ॥ ४ ॥ अनघजिन-

वरगोत्र सुगोत्रं॥ कामकुंनमणिनिर्जरगोत्रं॥संयमदृढतागोत्रं॥५॥नेदितनवनयमरणारिष्ट॥ प्रकटितमहिमातिशयवरिष्ट ॥ जगदैश्वर्यगरिष्टं ॥६॥ विहिताखिलनविजनकल्याणं॥ पालितयथाख्यातकल्याणं॥ दत्तमार्गणकल्याणं॥७॥ आधिवधवधगदहर्तारं॥वाञ्छितकुशलसौख्यकर्तार ॥ नुवनत्रयनर्तार॥८॥ विकटकष्टनिवारणशूर ॥ आगमनयप्रकाशनसूर॥ नारतीगंगापूर ॥ ए ॥ धृतिकीर्तिबुद्धिलक्ष्मीगणविश्वं ॥ केवलयुगलालोकितविश्व ॥ प्राप्तजिनेप्सितविश्व ॥१०॥सेवकमनोनीष्टदातारं ॥ रंजितदेवनरनेतार॥ अनुनूतकुलत्रातारं ॥११॥ इन्द्रनीलमणिवर्णसुवर्णं ॥ निखिलदेशविख्यातसुवर्णं ॥ वाक्सुधासारसुवर्णं ॥ १२ ॥ मुक्तिसीमतिनीसंगमलुब्धं ॥ चचलविषयसुखसंगालुब्धं ॥ कर्मपराविप्रलुब्धं ॥ १३ ॥ वंदितामरमौलिकुटीरं ॥ विषमकषायदवानलनीरं ॥ उत्कटपरीषहधीर ॥ १४ ॥ अचलगणनीरधीसारगं ॥ कीर्तिलतावर्द्धनसारग ॥ दुर्ज्ञानशलनसारंगं ॥ १५ ॥ वंदेऽनंतचतुष्टयिराजं ॥ पूजितसुरपतिमानवराजं ॥ प्रवरतीर्थाधिराज ॥ १६ ॥ षोमशन्नि कुलकं ॥ शिवतातिपार्श्ववरदवरपार्श्वं ॥ मोहतमिस्रसवितार ॥ नागराजराजं त्रिनुवनपूज्यं लब्धनवोदधिपारं ॥ ॥ शुनसागरनित्यप्रथितगरिमाण ये ध्यायंति, विन्नुं मुदा लक्ष्मीस्तान्समुपैतिसत्वरमतुलासर्वार्थसिद्धिप्रदा ॥ १७ ॥ इति ॥

## ॥ अथ श्रीपार्श्वजिनस्तवन प्रारंनः ॥

॥ तोटक छंद ॥ नविकांबुजनासननानुनिन्न, नवतापसमापनवारिधरं ॥ रचितागमशास्त्रविचारनय, जय मंगलकीर्तियशोनिचय ॥ १ ॥ कमलामलकेलिगृह विमलं, लसदाशयमुषितसततमस ॥ शुनसागरवर्द्धनचंद्रमस, सकलामरपूजितपादकजं ॥ २ ॥ विकटोत्कटकर्ममृगेन्नरिपुं, खगनागनरेश्वरदेवनतं ॥ तरसाजितमोहरिपु विनयं, यमसवरसहितसाधुहित ॥ ३ ॥ शुनलक्षणलक्षितहस्तयुगं, गजराजगतिं गतविघ्नरुज ॥ जनतामयनेषजमीशवर, दशनद्युतिद्योतितचारुमुखं ॥ ४ ॥ कनकाचलधीरमनीष्टतरं, रसनारसरंजितसर्वसन ॥ नुवनत्रयमङ्गलमोघतरं, रुचिराकृतिमोहितदेवजन ॥ ५ ॥ अरिहंतमनुत्तरतीर्थकरं, रचितं वरबुद्धिधन जिनप ॥ पुरुषोत्तममसरमर्थनिधि, धृतिकातिनिकेतनमगिनुतं ॥ ६ ॥ निजवंशवतसकमार्तिहरं, रवनिर्जितमेघनदं शिवद ॥ दयित नुवि विश्वजनीनतमं, नतनूतगण जितखोनन्नट ॥ ७ ॥ शरणाश्रितपालकमुक्तिपदं, दधतं वरशातरसं नवम ॥ महसेंद्रमणिप्रनदेहधर, धरणेंद्रनिषेवितपार्श्वयुग ॥ ८ ॥ अमम तनुपार्श्वजिन सतत, तपसा हतसिद्धमनतबल ॥ ललनाजनसंगविरक्तमलं, ॥ मलवर्जितमुत्तरसौख्यधर ॥ ए ॥ नवन्नि.कुलकं ॥ सुरराजखेचरनागपुरदरधरणिराजसुसेवित, श्रीपार्श्वजिनेश्वरं नमितसुरेश्वरपद्मावतीसस्तुत ॥ येऽनंतनक्त्या विशुद्धशक्त्या सस्तुवंति जिन मुदा, शुनसागरपठनाव्रविकरमासमेत ते लनंति सुख सदा ॥ १० ॥ इति ॥

## ॥ अथ श्रीमहुरपार्श्वाष्टक प्रारंनः ॥

द्रुतविलंबित छंद ॥ विबुधमानवमानसनदन, विनवदानविधौ हरिचदनं ॥ निखिलसन्यजनै कृतवंदन, नजत पार्श्वजिन महुराजिध ॥ १ ॥ युगलकौशिकसाम्यतराशयं, नुवननानुनिवासघनाश्रयं ॥ विषयिवारणकेसरिसन्निन, नजत पार्श्वजिन महुराजिधं ॥ २ ॥

अरुणकोटीविज्ञाधिकज्ञास्वरं, कुमुदवांधवशुभ्रतराननं ॥ वरगजीरगुणोत्तमसागरं, ज्ञजत० ॥ ३ ॥ ज्ञविकपद्मविज्ञासनज्ञास्करं, जगति ज्ञावप्रकाशनदीपकं ॥ नयनपाटवपावनतंत्रकं, ज्ञजत० ॥ ४ ॥ रचितकामठवारिदसंचयै—रखिलधैर्यसमन्वितचेतसं ॥ विकटकर्मसमीरणज्ञोगिनं, ज्ञज० ॥ ५ ॥ कमठनिर्मितपांशुकदंवकैः, स्थिरतरोत्कटज्ञावविराजितं ॥ जगति पुर्जनसर्पविषापहं, ज्ञजत० ॥ ६ ॥ प्रशमज्ञूषणज्ञूषणज्ञूघनं, सुज्ञगज्ञाग्यगुणावलिमंदिरं ॥ धवलकीर्तियशोवरवासितं, ज्ञजत० ॥ ७ ॥ सकलसंघसमीहितकर्तृकं, निचितविघ्नपराज्ञवहर्तृकं ॥ अतिशयाद्भुतचारुचरित्रकं, ज्ञजत० ॥ ८ ॥ हरिणी छंदः ॥ मद्धुरजिनपं नित्यं वंदे शिवोदधिवर्द्धनं, शशिनमनिशं किण्वध्वांते दिनेशमहोदयं ॥ स्तवनज्ञणने चिताल्हादैः कृतादरसेवके, विविधधनदं विश्वे विश्वे जिनेशनताननं ॥ ए ॥ द्रुतविलंवित छंदः ॥ मद्धुरपार्श्वजिनेश्वरसंस्तवं, पठति यः सुधियोषसि नित्यशः ॥ वसति तस्य गृहे कमलाऽखिला, स्थिरतरासुमतां वरदायिनी ॥ १० ॥ इति ॥

## ॥ अथ श्रीसत्यपुरीय श्रीमहावीरस्तवन प्रारंज्ञः ॥

द्रुतविलंवित छंदः ॥ त्वमसि सज्जनंदनमंदरस्त्वमसि मेरुलतावलिमंरूपः ॥ त्वमसि खेचरनाकिनरस्तुत–स्त्वमसि रूपवशीकृतविष्टपः ॥ १ ॥ त्वमसि योगिजनौघशिरोमणि—स्त्वमसि कांतिविकाशितदिग्गणः ॥ त्वमसि ज्ञापितरंजितनागर–स्त्वमसि सिद्धिवशारतिमोहितः ॥ २ ॥ त्वमसि ज्ञद्रकरः करुणालय–स्त्वमसि ज्ञक्तचकोरनिशाकरः ॥ त्वमसिदर्शनहर्षितमानव—स्त्वमसि संसृतिसागरपोतकः ॥३॥ त्वमसि मोहमहीरुहसुज्ञर—स्त्वमसि धर्मधनो धनकामदः ॥ त्वमसि संशयवायुज्ञुजंगम—स्त्वमसि दर्शितजीवदयापथः ॥ ४ ॥ त्वमसि धारितशीलविज्ञूषण–स्त्वमसि कामितदानसुरद्रुमः ॥ त्वमसि देवनराधिपवंदित—स्त्वमसि जाड्यतमिस्रनज्ञोमणिः ॥ ५ ॥ त्वमसि कर्मवनावनिपावक–स्त्वमसि सेवकपूजितपंकजः ॥ त्वमसि जन्मजरामृतिवारण—स्त्वमसि शाश्वतमोक्षपदस्थितः ॥ ६ ॥ त्वमसि मंजुलसत्कुलदीपक—स्त्वमसि सर्वपदार्थविशारदः ॥ त्वमसि लोकनतोनतवत्सल–स्त्वमसि देवशिवीमुखपुष्करः ॥ ७ ॥ त्वमसि नाथ मनोहरलक्षण–स्त्वमसि संमतजीवगणः सदा ॥ त्वमसि संवरमार्गविधायक–स्त्वमसि दानगुणाह्निपतकल्पकः ॥ ८ ॥ त्वमसि चित्रकरातिशयांचित–स्त्वमसि सूरिततीश्वरसेवितः ॥ त्वमसि पुःखिजनावनतत्पर–त्वमसि हारनिज्ञः क्षितिमंरूले ॥ ए ॥ त्वमसि शिष्टनरामरसंगत-स्त्वमसि लोकचमत्कृतनिर्ममः ॥ त्वमसि केवलिसाधुनतो मुदा, त्वमसि कुग्रहदोषनिवारकः ॥ १० ॥ त्वमसि सद्व्रतज्ञारवृषोपम–स्त्वमसि वीतमदो विशदाशयः ॥ त्वमसि तीर्थपते रुचिराह्वय—स्त्वमसि गुप्तिपवित्रितमानसः ॥ ११ ॥ त्वमसि बुद्धिपराजितगीःपति–स्त्वमसि हाटकसन्निज्ञविग्रहः ॥ त्वमसि ज्ञाग्यविनाशनिकेतन–स्त्वमसि लोज्ञमहीधरवज्रकः ॥१२॥ त्वमसि सप्तज्ञयार्णवतारक—स्त्वमसि पुर्घटसत्यनयाध्वगः ॥ त्वमसि संमदसंततिकारक-स्त्वमसि सिद्धिकरो वरदायकः ॥ १३ ॥ त्वमसि विश्वजगज्जनवल्लज्ञ—स्त्वमसि रक्षितज्ञूतकदंवकः ॥ त्वमसि पुर्नगपुस्थहरोऽनिशं, त्वमसि विस्तृतलोचनरंजकः ॥ १४ ॥ त्वमसि विश्वपतिश्रितवांधव–स्त्वमसि वक्रतिरस्कृतचंद्रमाः ॥ त्वमसि वैरिसमुच्चयटोज्ञव—स्त्वम-

सि तीर्थंकर' प्रतिबोधदः ॥ १५ ॥ त्वमसि भव्यशिखंडिवलाहक—स्त्वमसि बंधुरमूर्तिध- रोऽजरः ॥ त्वमसि सर्वविभुर्विगतातुर—स्त्वमसि सयममंडनमंडित' ॥ १६ ॥ त्वमसि शांतरसाश्रितचेतन—स्त्वमसि पौरुषनिर्जितकार्मणः ॥ त्वमसिदुर्लभबोधिनिबंधन—स्त्वमसि कामदुधाधिकदानदः ॥ १७ ॥ त्वमसि संचितपुण्यनिधि पर—स्त्वमसि विघ्नसरीसृपगारुड ॥ त्वमसि शुभ्रयशोभरमंदिर—स्त्वमसि सघजयोन्नतिहर्षद. ॥ १८ ॥ त्वमसि सत्वहितो मतिवर्द्धन—स्त्वमसि धर्मसरोजसर' समः ॥ त्वमसि चक्रिनतो भविशेखर—स्त्वमसि पारगतः परमेश्वरः ॥ १९ ॥ त्वमसि सत्यपुरामलभूषण—स्त्वमसि संश्रितपादमृगाधिपः ॥ त्वमसि केवलयुग्मविराजित—स्त्वमसि वीरजिनो जिननायक. ॥ २० ॥ त्वमसि शासनपोतनियामक—स्त्वमसि साधुदयालुललामक' ॥ त्वमसि सौख्यकरस्त्रिशलागज—स्त्वमसि विश्वगुरु शुभसागर. ॥ २१ ॥ हरिणी छंद. ॥ जयति सततं वीरः शंभुर्भवोदधिपारगो, जगति तिलकः पापध्वाते गभस्तिरनुत्तरः ॥ कुशलनिलयस्तीर्थस्वामी सुरासुरसंस्तुतो, विदि, तमहिना विश्वे विश्वेश्वरार्चितपत्कज ॥ २२ ॥ वंशस्थ छंद' ॥ कुलावतंसं यतिधर्मदेशकं- कलदिकापारगमंगिपालक ॥ नवीमि वीर मतिदं हितावह, मनोर्थसपादनकामकुभक ॥ २३ ॥ भुजगप्रयात छद' ॥ प्रभु देववद्य जिनं विश्वनाथ, जगच्चारुचूडामणिं वीरनाथं ॥ स्तुवेऽहं जितारिं नतस्वर्गिनाथं, सदा शांतिकारं नरेंद्राधिनाथं ॥ २४ ॥ स्रग्धरा छद ॥ श्रीराजं वीरदेवं प्रणतसुरमणि देवमर्त्याधिराजं, कल्याणाभोधिवृद्धौ विमलशशधर भाग्यसौभाग्यकार ॥ ये भव्या. संस्तुवति प्रतिदिनमनघ चारुभक्त्या त्रिसंध्यं, प्रख्यातिं ते लभंते त्रिभुवनविदिता कीर्तिमागृभारकर्त्रीं ॥ २५ ॥ इति ॥

## ॥ अथ श्रीवीराष्टकं ॥

तुभ्यं नम. समयधर्मनिवेदकाय, तुभ्यं नमस्त्रिभुवनेश्वरशेखराय ॥ तुभ्यं नमः सुरनरामरसेविताय, तुभ्य नमो जिन जनार्चितपत्कजाय ॥ १ ॥ तुभ्य नमोऽखिलपते हरिचंदनाय, तुभ्य नमो वरकुलावरभास्कराय ॥ तुभ्य नमः प्रणतदेवनराधिपाय, तुभ्यं नमः प्रवररूपमनोहराय ॥ २ ॥ तुभ्य नमो हरिणनायकनायकाय, तुभ्य नमो यतिततिप्रतिपालकाय ॥ तुभ्य नमो विकचनीरजलोचनाय, तुभ्य नमस्तनितनादविराजिताय ॥ ३ ॥ तुभ्य नम. कुशलमार्गविधायकाय, तुभ्य नमो विकटकष्टनिषेधकाय ॥ तुभ्य नमो डुरितरोगचिकित्सकाय, तुभ्य नमस्त्रिजगतो हृदि भूषणाय ॥ ४ ॥ तुभ्यं नमो दलितमोहतमोभराय, तुभ्यं नम कनकसन्निभभूघनाय ॥ तुभ्य नमोऽप्यखिलसद्गुणमंदिराय, तुभ्य नमो मुखकलोदितचन्द्रिकाय ॥ ५ ॥ तुभ्यं नमोऽतिशयराजिविभूपिताय, तुभ्य नम कुमतितापसुभजनाय ॥ तुभ्यं नमो मुखपयोधिवहित्रकाय, तुभ्य नमो विगतकैतवमत्सराय ॥ ६ ॥ तुभ्यं नमो विदितभव्यजनाशयाय, तुभ्य नमो निखिलसंशयवारकाय ॥ तुभ्य नम. प्रथितकीर्तियशोन्विताय, तुभ्य नमो जितहृषीकमुनीश्वराय ॥ ७ ॥ तुभ्य नमो प्रमितपुण्यनिर्मिताय, तुभ्य नम सकलवाङ्मयपारगाय ॥ तुभ्य नमो भविकचातकनीरदाय, तुभ्य नमश्शरणवज्रभदायकाय ॥ ८ ॥ कुलकम् ॥ वीराष्टकं पठति य सतत त्रिसध्य, त्यक्त्वा सदा भवलमोहजड़ प्रमाद ॥ तस्मिन्‍ मङ्गु कुरुते कमला निवाम, कल्याणसागरभुवामसतामभीष्ट ॥ ९ ॥ इति ॥

## ॥ अथ श्री लोडणपार्श्वनाथस्तवन प्रारंभः ॥

श्रीकरं कष्टहर्त्तारं, विधिवादप्रकाशकं ॥ धिया तर्जितवागीशं, परमात्मानमन्वहं ॥ १ ॥ क्षमागारं कृपापात्रं, गताधिव्याधिदूषणं ॥ ठेकं तु सर्वकार्येषु, श्रीप्रदं दलितामयं ॥ २ ॥ धनधान्यकरं लोके, रमाकेलिपदं परं ॥ मर्मतामदमातौघ-मूर्खतादोपवर्जितं ॥ ३ ॥ आर्तिसंतापभेत्तारं, सूरिश्रेणिशिरोमणिं ॥ रिपुसारंगसारंग-मंगिनाथनिषेवितं ॥ ४ ॥ तेजसां मंदिरं रम्यं, वारिताशेषफर्जनं ॥ निःसीमं सर्वगोत्राणां, श्रीमंतं गुणसागरं ॥ ५ ॥ कथिताचारमार्गौघं, कल्याणकमले विधुं ॥ प्रणताशेषदेवेशं, शासनं कांतभूघनं ॥ ६ ॥ गदितागमसंदोहं, रसनामृतसुंदरं ॥ सूराधिकप्रतापालिं, रिक्थदं दमितेंद्रियं ॥ ७ ॥ नागेंद्रविबुधैः सेव्यं, लोकानां शांतिकारकं ॥ जमताया विभेत्तारं, नयनाह्लादकारणं ॥ ८ ॥ पालकं सर्वसत्वानां, पार्श्वयक्षेण पूजितं ॥ नाकिमानववंद्यांघ्रिं, नाथनाथं जगत्प्रभुं ॥ ९ ॥ क्रियासंततिनेतारं, त्रासितानेकदोषकं ॥ कृतांतार्थं विचारज्ञं, तारतारुण्यराजितं ॥ १० ॥ संसारसागरे पोतं, घस्रराधिविवर्जितं ॥ सर्वज्ञं मेघगंभीरं, हितं विश्वस्य सर्वदा ॥ ११ ॥ तेजोनिधिं मुदा पार्श्वं, नवीमि लोमणाभिधं ॥ कल्याणसागराख्येन, संस्तुतं ह्यादिमाक्षरैः ॥ १२ ॥ द्वादशभिः कुलकं ॥ श्रीमल्लोमणपार्श्वनाथमवनौ विख्यातगोत्राभिधं, ये भव्या वरभावभक्तिसहिताः पूजंति सौख्यार्थिनः॥ ते सत्वाः सुखमानकीर्तिकलिताः कल्याणतुंगाः परा, जायंते भुवने प्रतापरुचिरा आदेयवाचः सदा ॥ १३ ॥ इति ॥

## ॥ अथ श्रीसेरीशपार्श्वाष्टक प्रारंभः ॥

कामौघकर्त्तारमशेषदेवा-धीशैस्सदाचर्चितपादपद्मं ॥ कल्याणकारं वरनीलवर्णं, सेरीशपार्श्वं नुथ लोमणाख्यं ॥ १ ॥ सत्पुण्यवल्लीवनवारिधारं, निःशेषभव्यावलिपूरिताशं ॥ त्रैलोक्यभर्त्रं भुवनाधिनाथं, सेरीशपार्श्वं नुथ लोमणाख्यं ॥ २ ॥ सारंगवाणीजितचित्तदार्ढ्यं, सारंगगंभीरनिनादकांतं ॥ सारंगसारांचकयुग्मराजं, सेरीश० ॥ ३ ॥ विश्वेषु सत्वेषु कृपानिधानं, सम्यक्त्वरत्नाभरणांकितांगं ॥ दुःखांगपर्शुं दलिताखिर्गं, सेरीश० ॥ ४ ॥ अपारसंसारसमुद्रपोतं, सर्वज्ञमाचारपवित्रवंशं ॥ राधांतशास्त्रार्थरहस्यदक्षं, सेरीश० ॥ ५ ॥ वाणीरसानंदितविश्वविश्वं, तीर्थंकरं नागपुरेशपूज्यं ॥ सर्वत्र विख्यातयशोभिरामं, सेरीश० ॥ ६ ॥ तेजोनिधिं कामितकामकुंभं, सौजन्यसौहार्दविलासपात्रं ॥ कल्याणसूर्यादिवितानहेतुं, सेरीश० ॥ ७ ॥ आदित्यचंद्राधिकदेहभासं, सत्प्रातिहार्याष्टकराजिराजं ॥ स्फाराकृतौ मोहितदेवदेवं, सेरीश० ॥ ८ ॥ कलशः ॥ एवं कल्याणवंद्यं त्रिभुवनतिलकं लोमणाई सुपार्श्वं, कृत्वैकाग्र्यं स्वचित्ते भवसफलकृते ज्ञानसंपत्तिसिद्ध्यै ॥ नित्यं ध्यायंति भव्या जिनसमयरताः शुभ्रलेश्याभिरामा-स्तेषां हर्षात्प्रकामं भवति च सदने मंजुपद्मा निवासः ॥ ९ ॥ इति ॥

## ॥ अथ श्रीसंभवनाथाष्टकप्रारंभः ॥

लावण्यगेहं कलहेमवर्णं, लज्जोज्झितं सुंदरवाहचिन्हं ॥ लक्ष्मीकलापार्णवधिष्ण्यनाथं, देवैर्नतं संभवनाथमीडे ॥ १ ॥ श्येनांगजं दारुणकर्मशत्रौ, वीरं वरं पूतचरित्रशोभं ॥

क्षेमास्पदं सद्गुणरत्नखानिं, देवैर्नतं संभवनाथमीडे ॥ २ ॥ इक्ष्वाकुवंश वरतिग्मरश्मि–रार्कं- ध्रुवर्क्षं गतचक्रमाद्य ॥ अज्ञानवैश्वानरशांतिनीरं, देवैर्नत० ॥ ३ ॥ दुःखोदधौ पीतसमुद्र- मिद्धं, सत्प्रातिहार्याष्टकराजिराज ॥ क्षमानिधि विस्तृतपुण्यमूर्ति, देवैर्नत०॥ ४ ॥ भव्यैर्मु- दा सेवितपादपद्म, सद्ज्ञानवज्राहृतमोहभूधर ॥ संसारदावाकुलमर्त्यमेघ, देवैर्नतं० ॥ ५ ॥ सत्कीर्तिपात्रं दुरितारिसेव्यं, जगज्जनानंदकर शरण्य ॥ कारुण्यसंयुक्तपवित्रचित्त, देवै- र्नतं० ॥ ६ ॥ कुंदार्द्रदंतं कजलोचनं वै, वपुःश्रिया तर्जितसूर्यकांतिं ॥ पापांधकारेऽमल- दीपक तं, देवैर्नतं० ॥ ७ ॥ प्रसादनात्तत्परसेवकस्ये–प्सितार्थदाने सुरदेववृक्ष ॥ सुखैरनेकैर्यु- तचारदेहं, देवैर्नतं० ॥ ८ ॥ कलश. ॥ इत्यष्टकं श्रीजिनसंभवस्य, पठति ये मंजुलभाव- युक्त्या ॥ तेषां गृहे पुण्यनिधानभव्याः, कल्याणकाराश्च भवति रुद्धय ॥ ९ ॥ इति श्रीम- ज्जिननायकस्य श्रीसूर्यपुरभूषणस्य श्रीसंभवनाथस्याष्टक संपूर्ण ॥

## ॥ अथ श्रीमत्पार्श्वनाथस्तवनाष्टक प्रारंभः ॥

श्रियः संततेः कारकः श्रीजिनेशं, महामोहदुर्भायनाशे दिनेश ॥ नतं नाकिभिर्भक्ति- भिर्जीवनाथं, स्तुवे देवचिंतामणि पार्श्वनाथं ॥ १ ॥ महानागपारींद्रवैश्वानराहि–प्रभाता- युधिरोगसद्दानदाह ॥ जितानेकपक्षं त्रिविश्वैकनाथ, स्तुवे देवचिंतामणिं पार्श्वनाथं ॥ २ ॥ क्षमापार्श्वसेनस्य वंशेऽवतस, हतक्रोधशत्रुं च लक्ष्मीनिवास ॥ जनाभोजखंडस्फुटे घस्रनाथं, स्तुवे० ॥ ३ ॥ सतां मोक्षपद्मीप्रदानैकहेतुं, महाकृच्छ्रविच्छेदने धूमकेतु ॥ कर्मेदीवराली- ननागाकनाथ, स्तुवे० ॥ ४ ॥ सनीराबुदश्यामशिष्टांगकांतिं, सुविस्तारितविष्टपाशेषशांति ॥ गतान्यूनदोषं वरं मुक्तिनाथं, स्तुवे० ॥ ५ ॥ नरेंद्रादिवंद्य सदालब्धयोगं, निशारत्नकंभ्रा- नन त्यक्तशोकं ॥ कृपाभाजन विश्वदेवाधिनाथं, स्तुवे० ॥ ६ ॥ जगत्तारकं दायकं सज्ज- नाना, श्रिय वाञ्छितार्थप्रद निर्धनानां ॥ सुरम्यस्वरूपैर्निर्जितानाकिनाथं, स्तुवे० ॥ ७ ॥ कषायाग्रसतर्पणे वारिदान, जराभीरुमातंगपचास्यशोभं ॥ विदुष्टाष्टकर्मोरगे पत्रिनाथ, स्तुवे० ॥८॥ इत्येवं श्रीमद्वी–रचंद्रशिशुना मलुकचंद्रेण ॥ जयतु चिर स्तुतः पार्श्व–जिनवरो निर्जितमदराग ॥ इति श्रीमत्पार्श्वनाथस्तवनाष्टक संपूर्णं ॥

## ॥ अथ श्रीचिंतामणिपार्श्वनाथजिनस्तोत्रं प्रारंभः ॥

किं कर्पूरमय सुधारसमयं किं चंद्ररोचिर्मयं, किं लावण्यमयं महामणिमयं कारुण्यके- लीमयं ॥ विश्वानंदमय महोदयमय शोभामयं चिन्मय, शुक्लध्यानमय वपुर्जिनपतेर्भूयाद्भ- वालंबन ॥ १ ॥ पाताल कलयन् धरा धवलयन्नाकाशमापूरयन्, दिक्चक्रं क्रमयन् सुरा- सुरनरश्रेणिं च विस्मापयन् ॥ ब्रह्माण्डं सुखयन् जलानि जलधेः फेनच्छलाल्लोलयन्, श्रीचिं- तामणिपार्श्वसंभवयशो हसश्चिर राजते ॥ २ ॥ पुण्यानां विपणिस्तमोदिनमणिः कामेन कुं- भसृणि–र्मोक्षे निःसरणिः सुरेन्द्रकरणिर्ज्योतिः प्रभासारणिः ॥ दाने देवमणिर्नतोत्तमजनश्रे- णिकृपासारणि–र्विश्वानंदसुधाघृणिर्भवभिदे श्रीपार्श्वचिंतामणिः ॥ ३ ॥ श्रीचिंतामणिपार्श्व- विश्वजनतासंजीवनं त्व मया, दृष्टस्तात ततः श्रिय समभवन्नाशक्रमाचक्रिणं ॥ मुक्तिः क्रीडति हस्तयोर्बहुविध सिद्धं मनोवाञ्छितं, दुर्दैवं दुरितं च दुर्दिनभयं कष्टं प्रणष्टं मम ॥४॥

यस्यप्रौढतमप्रतापतपनः प्रोद्दामधामा जग-ज्जंघालः कलिकालकेलिदलनो मोहांधविध्वंसकः॥ नित्योद्योतपरं समस्तकमलाकेलीगृहं राजते, स श्रीपार्श्वजिनो जने हितकरो चिंतामणिः पातु मां ॥ ५ ॥ विश्वव्यापितमो हिनस्ति तरणिर्बालोऽपिकल्पांकुरो, दारिद्र्याणि गजावलिं हरिशिशुः काष्टानि वह्नेः कणः ॥ पीयूषस्य लवोपि रोगनिवहं यद्वत्तथा ते विभो, मूर्तिःस्फूर्तिमती सती त्रिजगति कष्टानि हर्तुं क्षमा ॥ ६ ॥ श्रीचिंतामणिमंत्रमोंकृतियुतं ह्रींकारसाराश्रितं, श्रीमर्हंनमिउणपासकलितं त्रैलोक्यवश्यावहं ॥ द्वेधाभूतविषापहं विषहरः श्रेयः प्रभावास्पदं, सोलासं वसुहांकितं जिनफुलिंगानंदनं देहिनं ॥ ७ ॥ ह्रींश्रींकारवरं नमोक्षरपरं ध्यायंति ये योगिनो, हृत्पद्मे विनिवेश्य पार्श्वमधिपं चिंतामणिसंज्ञकं ॥ भाले वामभुजे च नाभिकरयोर्भूयो भुजे दक्षिणे, पश्चादष्टदलेषु ते शिवपदं द्वित्रैर्भवैर्यात्यहो ॥ ८ ॥ नो रोगा नैव शोका न कलहकलना नारिमारीप्रचाराः,नैवांध्यं नासमाधि र्न च दुरदुरिते दुष्टदारिद्रतानो॥ नोशाकिन्यो ग्रहा नो न हरिकरिगणव्यालवेतालजाला, जायंते पार्श्वचिंतामणिनतिवशतः प्राणिनां भक्तिभाजां ॥ ९॥ गीर्वाणद्रुमधेनुकुंभमणयः स्वस्यांगणेरंगिणो, देवा दानवमानवाः सविनयः तस्मै हितं ध्यायिनः॥ लक्ष्मीस्तस्य वशा वशेव गुणिनां ब्रह्मांडसंस्थापिनी, श्रीचिंतामणिपार्श्वनाथमनिशं संस्तौति यो ध्यायति ॥१०॥ इति जिनपतिपार्श्वः पार्श्वपार्श्वाख्ययक्षः, प्रदलितदुरितौघः प्रीणितः प्राणिसंघः ॥ त्रिभुवनजनवांछादानचिंतामणिकः, शिवपदतरुबीजं बोधिबीजं ददातु ॥ ११ ॥ इति संपूर्णः ॥

## ॥ अथ श्रीपार्श्वजिनस्तुतिप्रारंभः ॥

लक्ष्मीर्महस्तुल्यसती सतीसती, प्रवृद्धकालोविरतो रतो रतो ॥ जरारुजापदमहता हता हता, पार्श्वफणेरामगिरौ गिरौ गिरौ ॥ १ ॥ अर्च्चेयमाद्यं सुमना मना मना, यः सर्वदेशेषु विनाविना विना ॥ समस्तविज्ञानमयो मयोमयो, पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥ २ ॥ व्यनिष्टजंतोः शरणं रणं रणं, क्षमादितो यः कमठं मठं मठं ॥ नरामरारामक्रमं क्रमं क्रमं, पार्श्वं फणे० ॥ ३ ॥ अज्ञानसत्कामलता लता लता, यदीयसद्भावनता नता नता ॥ निर्वाणसौख्यं सुगता गता गता, पार्श्वं फणे० ॥ ४ ॥ विवादिशाशेषविधिर्विधिर्विधिः, बभूव सर्वावहरिर्हरीहरी ॥ विज्ञानसंज्ञानहरो हरोहरो, पार्श्वं फणे० ॥ ५ ॥ यद्विश्वलोकैकगुरुं गुरुं गुरुं, विराजितायेनवरं वरं वरं ॥ तमालनीलांगभरं भरं भरं, पार्श्वं फणे० ॥ ६ ॥ संरक्षितो दिग्भुवनं वनं वनं, विराजिता येषु दिवैर्दिवैर्दिवै॥ पादद्वयेनूतसुरासुरासुराः, पार्श्वं फणे० ॥ ७ ॥ रराज नित्यं सकलाकलाकला, ममारतृष्णोवृजिनोजिनोजिनो ॥ संहारपूज्यं वृषभासभासभा, पार्श्वं फणे० ॥८॥ तर्के व्याकरणे च नाटकचये काव्याकुले कौशले, विख्यातो भुवि पद्मनंदिमुनिपस्तत्वस्यकोशं निधिः ॥ गंभीरं यमकाष्टकं भणति यः शंभूयसा लभ्यते, श्रीपद्मप्रभदेवनिर्मितमिदं स्तोत्रं जगन्मंगलं ॥९॥ इति श्रीपार्श्वजिनस्तुतिःसंपूर्ण॥

## ॥ श्रीगौडिपार्श्वप्रभुस्तवनप्रारंभः ॥

सकलभविकचेतःकल्पनाकल्पवल्ली ॥ गहनवनवितानं प्रोज्ञवद्वारिवाहं ॥ फणिपतिकलितांहीं चारुगौमीपुरेश–मनणुगुणनिधानं पार्श्वनाथं नमामि ॥१॥ विधुधनत विभो तेषूबदीदारपाया, सुगुरुभिरपिसम्यक् देवतूंहीबताया ॥ जिनतवपरिकर्मी आजहोताजकीमें,

परिरमतिमनोमे पासकीआसिकीमे ॥२॥ शिरसिममसिनाचेद् जो हुवे दस्ततेरा, भुवनजनचमत्कृत् तौपुर्लवपृतमेरा ॥जयतिजयिप्रताव'पासजीकाउनीमे, चतुरनिकरवक्रात् सिफूत तेरी सुनीमे ॥३॥ त्वमसि मम विधाता तूंहिमादर्पिदर्तु, कुरुमञ्जुपरितूर्णं दोस्तसीधीनिजर्तुं ॥ कलयतिमनुजन्मा यारतारीफकेती, तवत्रिभुवनराजो जोभुजांएकसेति ॥ ४ ॥ अनिमिषप्रणताहे मातवामाकेनंदा, त्वमसिममशरण्यस्तेंप्रभूजीहुंबदा ॥ त्वमपियदिमदीया अरजुदिल्मेंनल्यावैं, जवतसकलमोन्यो दादजिमूपासजावैं॥ ५ ॥ नहिनहिविहितास्तेकब्रुगुनहकी कर्मीमे, सहनभतत्वदाज्ञो नाहिअस्मान्जमीमे ॥ परमतमकृपालो गुनहवगसीसकीजै, नृपतिमहिमजैत्री मौजमहाराजदीजै ॥ ६ ॥ स्थलपतिपुरतोहो औरकोदेवकैसा, जनयतिकिलवादं क्यारुपैयेसुपैसा ॥ लसतित्रिभुवनभर्तु नूरआफूताफजैसा, स्फुरतितवतरस्ते मर्दगाजीहमेसा ॥ ७ ॥ समुदितनवतेज श्रीधवलधिगदेवा, भृशमुपतनुतते नाथहरेरोजसेवा ॥ मयिजिनपघनत्विट् किजीऽऐसीनेकी, अलमहमिहदद्यां जैसीनौवत्फतेकी ॥ ८ ॥ कलशः ॥ इत्थश्रीपुरुहूतवंदितपदोगौमीपुरालकृति, वामाकुक्षिसर सरोरूहसम श्रीपार्श्वनाथप्रभु ॥ श्रीमत्पारकराख्यराष्ट्रसुदरीसिह'कृपाणा निधि, र्निश्वाहर्मणिरश्वसेनतनुभूर्विद्यार्णव सस्तुत. ॥ ९ ॥ इतिश्रीगौमीशपार्श्वप्रभुस्तवन श्रीविद्यासागरसूरिविरचित सपूर्ण ॥

## ॥ अथ श्रीरत्नाकर पच्चीसी प्रारंभः ॥

श्रेय श्रियां मगलकेलिसद्म, नरेन्द्रदेवेंद्रनतांह्रिपद्म ॥ सर्वज्ञ सर्वातिशयप्रधान, चिर जय ज्ञानकलानिधान ॥ १ ॥ जगत्रयाधार कृपावतार, दुर्वारसंसारविकारवैद्य ॥ श्रीवीतराग त्वयि मुग्धभावा—द्विज्ञ प्रभो विज्ञपयामि किंचित् ॥ २ ॥ किं बाललीलाकलितो न बाल , पित्रो. पुरो जल्पति निर्विकल्पः॥ तथा यथार्थ कथयामि नाथ, निजाशय सानुशयस्तवाग्रे ॥ ३ ॥ दत्त न दान परिशीलितं च, न शालिशील न तपोभितप्त ॥ शुभो न भावोप्यभवद्भवेऽस्मिन्, विभो मया भ्रांतमहो मुधैव ॥ ४ ॥ दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण ॥ ग्रस्तोऽभिमानाजगरेण माया—जालेन बद्धश्च कथ भजे त्वां ॥ ५ ॥ कृतं मयामुत्र हित न चेह, लोकेऽपि लोकेश सुख न मेऽभूत्॥ अस्मादृशा केवलमेव जन्म, जिनेश जज्ञे भवपूरणाय ॥ ६ ॥ मन्ये मनो यन्नमनोज्ञवृत्त, त्वदास्यपीयूषमयूखलाभात् ॥ द्रुतं महानदरम कठोर—मस्मादृशा देव तदश्मतोपि ॥ ७ ॥ त्वत्त सुदुःप्राप्यमिद मयाप्तं, रत्नत्रय भूरिभवभ्रमेण ॥ प्रमादनिद्रावशतो गत तत्, कस्याग्रतो नायक पुत्करोमि ॥ ८ ॥ वैराग्यरंग' परवचनाय, धर्मोपदेशो जनरजनाय ॥ वादाय विद्याध्ययन च मेऽभूत्, कियद्ब्रुवे हास्यकर स्वमीश ॥ ९ ॥ परापवादेन मुख सदोष, नेत्रं परस्त्रीजनवीक्षणेन ॥ चेत' परापायविचिंतनेन, कृत भविष्यामि कथ विभोऽह ॥ १० ॥ विडवितयत्स्मरघस्मरार्त्ति—दशावशात्स्व विषयाधलेन ॥ प्रकाशितं तद्भवतो ह्रियैव, सर्वज्ञ सर्व स्वयमेव वेत्सि ॥ ११ ॥ ध्वस्तोऽन्यमत्रै परमेष्ठिमन्त्र', कुशास्त्रवाक्यैर्निहतागमोक्ति' ॥ कर्तुं वृथा कर्म कुदेवसगा-द्वाञ्छि ही नाथ मतिभ्रमो मे ॥ १२ ॥ विमुच्य दृग्लक्ष्यगतं भवंत, ध्याता मया मूढधिया हृदत. ॥ कटाक्षवक्षोजगभीरनाभी—कटितटीया' सुदृशा विलासा ॥ १३ ॥ लोलेक्षणावक्त्रनिरीक्षणेन, यो मानसे रागलवो विलग्न ॥ न शुद्धसिद्धांतपयोधिमध्ये,

धौतोप्यगात्तारक कारणं किं ॥ १४ ॥ अंगं न चंगं न गुणो गुणानां, न निर्मलः कोऽपि कलाविलासः ॥ स्फुरत्प्रजा न प्रजुता च कापि, तथाप्यहंकारकदर्थितोऽहं ॥ १५ ॥ आयुर्गलत्याशु न पापबुद्धि-र्गतं वयो नो विपयाजिलाषः ॥ यत्नश्च जैषज्यविधौ न धर्मे, स्वामिन्महामोहविरूंबना मे ॥ १६ ॥ नात्मा न पुण्यं न जवो न पापं, मया विटानां कटुगीरपीयं ॥ आधारि कर्णे त्वयि केवलार्के, पुरस्फुटे सत्यपि देव धिग्मां ॥ १७ ॥ न देवपूजा न च पात्रपूजा, न श्राद्धधर्मश्च न साधुधर्मः ॥ लब्ध्वापि मानुष्यमिदं समस्तं, कृतं मयारण्यविलापतुल्यं ॥ १८ ॥ चक्रे मया सत्स्वपिकामधेनु—कल्पद्रुचिंतामणिषु स्पृहार्त्तिः ॥ न जैनधर्मे स्फुटशर्मदेऽपि, जिनेश मे पश्य विमूढजावं ॥ १९ ॥ सद्भोगलीला न च रोगकीला, धनागमो नो निधनागमश्च ॥ दारा न कारा नरकस्य चित्ते, व्यचिंति नित्यं मयकाधमेन ॥ २० ॥ स्थितं न साधो हृदि साधुवृत्त्या, परोपकारान्न यशोर्जितं च ॥ कृतं न तीर्थोद्धरणादि कृत्यं मया मुधा हारितमेव जन्म ॥ २१ ॥ वैराग्यरंगो न गुरूदितेषु, नडुर्जनानां वचनेषु शांतिः ॥ नाध्यात्मलेशो मम कोऽपि देव, तार्यःकथं कारमयं जवाब्धिः ॥ २२॥ पूर्वे जवेऽकारि मया न पुण्य—मागामि जन्मन्यपि नो करिष्ये ॥ यदीदृशोऽहं मम तेन नष्टा, जूतोजवद्भाविजवत्रयीश ॥ २३ ॥ किं वा मुधाहं बहुधा सुधाजुक्, पूज्यत्वदग्रे चरितं स्वकीयं ॥ जल्पामि यस्मात्रिजगत्स्वरूप-निरूपकस्त्वं कियदेतदत्र ॥ २४ ॥ दीनोद्धारधुरधरंस्त्वदपरो नास्ते मदन्यः कृपा-पात्रं नात्र जने जिनेश्वर तथाऽप्येतां न याचे श्रियं ॥ किंत्वर्हन्निदमेव केवलमहो सद्बोधिरत्नं शिवं, श्रीरत्नाकरमंगलैकनिलयश्रेयस्करं प्रार्थये ॥ २५ ॥ इति श्रीसाधारणजिनस्तवनं श्रीरत्नाकरसूरिविरचितं संपूर्णं ॥

## ॥ अथ नवकारनो छंद प्रारंजः ॥

॥ दोहा ॥ वंछित पूरे विविधपरे, श्रीजिनशासनसार ॥ निश्चे श्रीनवकार नित, जपतां जय जयकार ॥ १ ॥ अडसठ अक्षर अधिकफल, नव पद नवे निधान ॥ वीतराग स्वयं मुखवदे, पंच परमेष्टि प्रधान ॥ २ ॥ एकज अक्षर एक चित्त, समर्यां संपति थाय ॥ संचित सागरसातनां, पातक दूर पलाय ॥ ३ ॥ सकल मंत्र शिर मुकुटमणि, सद्गुरु जाषित सार ॥ सो जविया मन शुद्धशुं, नित जपिये नवकार ॥ ४ ॥ छंद हाटकी ॥ नवकारथकी श्रीपालनरेशर, पाम्यो राज्य प्रसिद्ध ॥ समशानविषे शिवनाम कुमरने, सोवन पुरिसो सिद्ध ॥ नव लाख जपंतां नरक निवारे, पामे जवनो पार ॥ सोजवियां जत्तेचोखेचित्ते, नित्य जपिये नवकार ॥ ५ ॥ वांधी वडशाखा शिंके वेसि, हेठल कुंड हुताश ॥ तस्करने मंत्र समर्प्यो श्रावके, ऊड्यो ते आकाश ॥ विधिरीत जप्यो विषधर विष टाले, ढाले अमृतधार ॥ सो० ॥ ६ ॥ वीजोरां कारण राय महावल, व्यंतर दुष्ट विरोध ॥ जेणे नवकारे हत्या टाली, पाम्यो यक्षप्रतिवोध ॥ नव लाख जपतां थाए जिनवर, इस्यो छे अधिकार ॥ सो० ॥ ७ ॥ पल्लिपति शीख्यो मुनिवर पासे, महामंत्र मनशुद्ध ॥ परजवते राजसिंह पृथ्वीपति, पाम्यो परिगल ऋद्ध ॥ ए मंत्रथकी अमरापुर पहोतो, चारुदत्त सुविचार ॥ सो० ॥ ८ ॥ सन्यासी काशी तप साधंतो, पंचाग्नि परजाल ॥ दीठो श्रीपासकुमारे पन्नग, अधवलतो ते टाल ॥ संजलाव्यो श्रीनवकार स्वयंमुख, इंद्रजुवन अवतार

॥ सो० ॥ ए ॥ मनशुद्धे जपता मयणासुदरी, पामी प्रियसंयोग ॥ इण ध्याने कष्ट टल्यु उंवरनु, रक्तपित्तना रोग ॥ निश्चेशुं जपता नवनिधि थाये, धर्मतणो आधार ॥ सो० ॥ ॥ १० ॥ घटमाहि कृष्णभुजगम धाल्यो, घरणी करवा घात ॥ परमेष्टिप्रभावे हार फूलनो, वसुधामा विख्यात ॥ कमलावतीये पिंगल कीधो, पापतणो परिहार ॥ सो० ॥ ११ ॥ गयणागणजाति राखी ग्रहीने, पामी बाण प्रहार ॥ पद पच सुणता पाडुपतिघर, ते थइ कुता नार ॥ ए मंत्र अमूलक महिमामंदिर, भवदु ख भजणहार ॥ सो० ॥ १२ ॥ कंबलने-सवलकादवकाढ्या, शकट पाचशे मान ॥ दीधे नवकारे गया देवलोके, विलसे अमर-विमान ॥ ए मंत्रथकी सपति वसुधातले, विलसे जैनविहार ॥ सो० ॥ १३ ॥ आगे चोवीशी हुइ अनति, होशे वार अनत ॥ नवकारतणी कोइ आदि न जाणे, इम भाखे अरिहत ॥ पूरवदिशि चारे आदिमपचे, समर्या संपतिसार ॥ सो० ॥ १४ ॥ परमेष्टि सुर-पद ते पण पामे, जे कृतकर्मकठोर ॥ पुंडरगिरि उपर प्रत्यक्ष पेख्यो, मणिधर ने एक मोर ॥ सद्गुरुने सन्मुखविधिसमरंता, सफल जन्म ससार ॥ सो० ॥ १५ ॥ शुलीकारोपण तस्कर कीधो, लोहखरो परसिद्ध ॥ तिहा शेठे नवकार सुणाव्यो, पाम्यो अमरनी ऋद्ध ॥ शेठने घर आवी विघ्ननिवार्या, सुरे करी मनोहार ॥ सो० ॥ १६ ॥ पंच परमेष्टिज्ञानज पचह, पचदानचारित्र ॥ पच सध्याय महाव्रत पंचह, पंच सुमतिसमकित ॥ पच प्रमादह विषय-तजो पच, पालो पचाचार ॥ सो० ॥ १७ ॥ कलश छप्पय ॥ नितजपिये नवकार, सारस-पति सुखदायक ॥ शुद्धमत्र ए शाश्वतो, इम जंपे श्रीजगनायक ॥ श्रीअरिहंतसुसिद्ध, शुद्ध-आचार्यभणीजे ॥ श्रीउवझाय सुसाधु, पंच परमेष्टि थुणीजे ॥ नवकारसारससारछे, कुशललाभ वाचक कहे ॥ एक चित्ते आराधता, विविधऋद्धिवंछितलहे ॥ १८ ॥

॥ इतिश्रीनवकारछंदसपूर्ण ॥

## ॥ अथ पच परमेष्टिस्तोत्र प्रारंभः ॥

दुहा ॥ सुखकारणभवियण ॥ समरो नित नवकार ॥ जिनसासनआगम । चउद पुर-वनो सार ॥ १ ॥ इणे मत्रे महिमा, कहिता न लहु पार ॥ सुरतरुमन सचित, वछित फल दातार ॥ २ ॥ सुर दानव मानव, सेव करे करजोडी ॥ भूमडलविचरे, तारे भवियण कोडि ॥ ३ ॥ सुरछदे विलसे, अतिशय जास अनत ॥ पहिले पद नमिए, अरिगजणअरिहत ॥ ४ ॥ जे पनर भेदे, सिद्ध थया भगवंत ॥ पचमि गति पोहता, अष्टकरम करि अंत ॥ ५ ॥ कलअकलस्वरूपी, पंचानंदकदेह ॥ सिद्धापयप्रणमु, बीजे पद वली एह ॥ ६ ॥ गछभार धुरधर, सुदर ससीहर सोम ॥ करे सारण वारण, गुणछत्तिसयतेम ॥ ७ ॥ सुत जाण सिरोमणि, सायर जेम गभीर ॥ त्रीजे पद नमीए, आचारजगुणधीर ॥ ८ ॥ सुत गुणधर आगल, सूत्र भणावे सार ॥ तपविधस्युं जोने, भाखे अरथ विचार ॥ ९ ॥ मुनिवरगुण-जुत्ता, ते कहिए उवझाय ॥ चउथे पद नमीए, अहनिश तेहना पाय ॥ १० ॥ पचाश्रव-टाले, पाले पंचाचार ॥ तपसी गुणधारी, वारि विषयविकार ॥ ११ ॥ त्रस थावर पीहर, लोकमाहि जे साध ॥ त्रिविधे ते प्रणमु, परमारथ जिणे लाध ॥ १२ ॥ अरी करी हरी सायणी, सायणी भूत वेताल ॥ सर्व पाप पणासे, आमे मगल माल ॥ १३ ॥ इणे समर-

णसंकट, कष्ट टले ततकाल ॥ जे जंपे इम जिनप्रभु, सुरवीर सीस रसाल ॥ १४ ॥ इतिश्री-पंचपरमेष्टिस्तोत्रसंपूर्णं ॥

## ॥ अथ गौतमस्वामीनो रास प्रारंभः ॥

प्रथम भाषा ॥ वीरजिणेसरचरणकमल, कमलाकयवासो ॥ पणमवि पभणिसुं सामिसाल, गोयमगुरुरासो ॥ मणतणुवयणएकंतकरवी, निसुणो भो भवियां ॥ जिम निवसे तुह्म देहगेह, गुणगणगहगहिया ॥ १ ॥ जंबुदीवसिरिभरहखित्त, खोणीतलमंरूण ॥ मगधदेशसेणियनरेश, रिजदलबलखंरूण ॥ धणवरगुबरगामनाम, जिहांगुणगणसज्जा ॥ विप्पवसे वसुभूइ तद्य, जसु पुहवी भज्जा ॥ २ ॥ ताण पुत्त सिरिइंदभूइ, भूवलयपसिद्धो ॥ चउदह विद्याविविहरूप नारीरसलुद्धो ॥ विनयविवेकविचारसार, गुणगणहमनोहर ॥ सातहाथसुप्रमाण, देह रुपे रंभावर ॥ ३ ॥ नयण वयण करचरणजिणवि, पंकजजलपारूीय॥ तेजें ताराचंदसूर, आकाशभमाऋिय ॥ रूवेमयणअनंगकरवी, मेल्हिउ निरधारूीय ॥ धीरम मेरुगंभीरसिंधु, चंगम चय चारूीय ॥ ४ ॥ पेखवि निरुवम रुवजास, जिण जंपे किंचिय ॥ एकाकीकिलभीतइब्ब, गुण मेल्हासंचिय ॥ अहवा निश्चे पुवजम्म, जिणवरइणअंचिअ ॥ रंभा पउमा गउरी गंगा, रतिहा विधिवंचीय ॥ ५ ॥ नहिं वुध नहिं गुरु कवि न कोइ, जसु आगल रहिउ ॥ पंचासयागुणपात्रछात्र, हिंरूेपरवरिउ ॥ करे निरंतर यज्ञकर्म, मिथ्यामति मोहिय ॥ इणछल होसे चरमनाण, दंसणहविसोहिय ॥ ६ ॥ वस्तु छंद ॥ जंवूदीवहजंवूदीवहभरहवासंमि, खोणितलमंरूणो ॥ मगधदेससेणीयनरेसर, धण वरगुबरगामतिहां ॥ विप्पवसेवसुभूइसुंदर, तसु भज्जा पुहवी सयल ॥ गुणगणरूवनिहाण, ताण पुत्त विद्यानिलउ, गोयम अतिहि सुजाण ॥ ७ ॥ द्वितीयभाषा ॥ चरमजिणेसर केवलनाणी, चउविहसंघ पइठाजाणी ॥ पावापुरसामीसंपत्तो, चउविहदेवनिकाये जुत्तो ॥ ८ ॥ देवे समवसरणतिहां कीजे, जिण दीठे मिथ्यामति खीजे ॥ त्रिभुवनगुरुसिंहासण वइठा, ततखिण मोहदिगंते पइठा ॥ ९ ॥ क्रोधमानमायामदपूरा, जाये नाठा जिम दिनचोरा ॥ देवदुंदुहि आकाशे वाजी, धरमनरेसरआविउ गाजी ॥ १० ॥ कुसुमवृष्टिविरचे तिहां देवा, चोशठ इन्द्र जसुमागे सेवा ॥ चामर छत्र सिरोवरि सोहे, रुपे जिणवर जग सहु मोहे ॥ ११ ॥ उवसमरसभरभरीवरसंता, जोजन वाणिवखाणकरंता ॥ जाणवि वर्द्धमाण जिणपाया, सुर नर किन्नर आवे राया ॥ १२ ॥ कंतिसमूहेझलहलकंता, गयणविमाणेरणरणकंता, पेखवि इंदभूइ मनचिंते, सुरआवेअम्हजगन होवंते ॥ १३ ॥ तीर तरंरूक जिम ते वहता, समवसरण पहोता गहगहता ॥ तो अभिमाने गोयमजंपे, इण अवसरे कोपे तणु कंपे ॥ १४ ॥ मूढ लोक अजाणीउ बोले ॥ सुर जाणंता इम कांइ मोले ॥ मू आगल कोइ जाण भणिजे ॥ मेरु अवर केम उपमा दीजे ॥ १५ ॥ वस्तु छंदः ॥ वीरजिणवर वीरजिणवर नाणसंपन्न, पावापुरि सुरमहियपत्त नाहसंसारतारण ॥ तिहिं देवेहिंनिम्मवियसमवसरणवहुसुरककारण ॥ जिणवर जगउज्जोय करे तेजे करि दिनकार ॥ सिंहासणसामियठविउ हुउ सुजयजयकार ॥ १६ ॥ तृतीयभाषा ॥ तो चढिउ घणमाणगजे, इंदभूई भूयदेवतो ॥ हुंकारो करी संचरिउ, कवण सुजिणवरदेवतो ॥ १७ ॥ जोजन भूमिसमोसरण, पेखवी प्रथमारंभतो ॥

दहदिसि देखे विबुधवधू, आवंती सुररजतो ॥ १० ॥ मणिमयतोरणदरुधज, कोसीसे-नवघाटतो ॥ वयरविवर्जितजंतुगण, प्रातिहारज आवतो ॥ १ए ॥ सुर नर किन्नर असुर वर, इन्द्रइन्द्राणि रायतो ॥ चित्तचमकिय चितवेए, सेवता प्रञ्जु पायतो ॥ २० ॥ सहस्र की-रणसम वीरजिण, पेखवी रूप विसालतो ॥ एह असजवसजवए, साचो ए इंद्रजालतो ॥ २१ ॥ तो बोलावे त्रिजगगुरु, इदजूई नामेणतो ॥ श्रीमुख ससय सामी सवे, फेडे वेद पएणतो ॥ २२ ॥ मानमेल्हि मदठेलीकरे, जगते नामे सीसतो ॥ पचसयासु व्रत लिर्उए, गोयम पहिलो सीसतो ॥ २३ ॥ बधवसजमसुणविकरे, अगिनिजूई आवेइतो ॥ नाम लेइ आजापकरे, तं पुण प्रतिबोधेइतो ॥ २४ ॥ इणि अनुक्रमे गणहररयण, थाप्या वीर इग्यारतो ॥ तो उपदेशे जुवनगुरु, सजमसुव्रत वारतो ॥ २५ ॥ बिहु उपवासे पारणुए, आपणपे विहरंततो ॥ गोयमसंजमजगसयल, जय जयकार करततो ॥ २६ ॥ वस्तु उद ॥ ॥ इदजूइ इदजूइ चढिय बहुमान, हुंकारोकरी संचरीयो, समवसरण पुहतो तुरंततो ॥ इह ससार सामी सवे, चरमनाह फेके फुरंतो ॥ बोध बीजसज्ञायमने, गोयमजवहविरत्त ॥ दिख लेइ सिरकासहिय, गणहरपयसपत्त ॥ २७ ॥ चतुर्थजाषा ॥ आज हुओ सुविहाण, आज पचेलिमा पुण्यजरो ॥ दीठा गोयम सामि, जो नियनयणे अमियजरो ॥ २८ ॥ सिरि गोयमगणहा, पचसयामुनिपरवरिय ॥ जूमियकरयविहार, जविया जन पमिबोह करे ॥ २ए ॥ समवसरणमकार, जे जे संशय उपजेए ॥ ते ते परउपगार, कारण पूछे मुनि-पवरो ॥ ३० ॥ जिहाजिहा दीजे दिरक, तिहा तिहा केवल उपजेए ॥ आपकन्हे अणहुंत, गोयम दीजे दान इम ॥ ३१ ॥ गुरुउपरगुरुजत्ति, सामिगोयमउपनिय ॥ इणछलकेवल-नाण, रागज राखे रगजरे ॥ ३२ ॥ जो अष्टापद शैल, वदे चढि चउविसजिण ॥ आतम-लब्धिवसेण, चरम सरीरी सोइमुनि ॥ ३३ ॥ इअदेसण निसुणेई, गोयम गणहर सचलिउ ॥ तापस पन्नरसएण, तो मुनि दीठो आवतोए ॥ ३४ ॥ तवसोसियनियअंग, अह्मसक्ति नवि उपजेए ॥ किम चढसे दृढकाय, गज जिम दिसे गाजतोए ॥ ३५ ॥ गिरुउ ए अजि-मान, तापस जो मन चितवेए ॥ तो मुनि चढिउवेग, आलवि दिनकरकिरण ॥ ३६ ॥ कंचणमणिनिप्पन्न, दरुकलसधजवरुसहिय ॥ पेखवी परमाणंद, जिणहर जरहेसर महिअ ॥ ३७ ॥ नियनियकायप्रमाण, चिहुदिसि संठिअजिणहबिंब ॥ पणमवि मन उल्लास, गोयम गणहर तिहा वसिय ॥ ३८ ॥ वयरसामिनो जीव, तिर्यकजूंजकदेव तिहा ॥ प्रतिबोधे पुमरीक, कंमरीक अध्ययन जणी ॥ ३ए ॥ वलता गोयमसामि, सवि तापस प्रतिबोध-करे ॥ लेइ आपणे साथ, चाले जिमजूथाधिपति ॥ ४० ॥ खीरखमघृतआणि, अमिअ वूठ अगुठ ठवे ॥ गोयम एकण पात्र, करावे पारणु सवे ॥ ४१ ॥ पंचसयासुज जाव, उजाल जरीउ खीरमीसे ॥ साचा गुरु सजोग, कवल ते केवल रुप हुआ ॥ ४२ ॥ पच-सया जिणनाह, समवसरण प्राकार त्रय ॥ पेखवि केवलनाण, उपन्नो उजोय करे ॥ ४३ ॥ जाणे जिणह पीयूष, गाजत्ति घणमेघ जिम ॥ जिणवाणी निसुणेइ, नाणी हूआ पचसया ॥ ४४ ॥ वस्तु उदः ॥ इणे अनुक्रमे इणे अनुक्रमे नाणसपन्न ॥ पन्नरह सयपरवरियहरिय दुरियजिणनाह वदे ॥ जाणवि जगगुरुवयणतिह, नाणअप्पाण निंदे ॥ चरम जिणेसर

इम जाणे गोयम मकरिस खेउ ॥ छेह जइ आपणसही होसुं तुल्लावेउ ॥ ४५ ॥ पंचम जाषा ॥ सामीउंएवीरजिणंद, पूनिमचंद जिम उल्लसिय ॥ विहरिउंए जरहवासम्मि, वरिस वहुत्तर संवसिय ॥ ठवतोए कणयपउमेव, पायकमल संघे सहिय ॥ आविउंए नयणाणंद, नयर पावापुरि सुरमहिय ॥ ४६ ॥ पेखिउंए गोयमसामी, देवसमा प्रतिबोध करे ॥ आपणए त्रिसलादेवी, नंदन पहोतो परम पए ॥ वलतोए देव आकास, पेखवि जाणिय जिणसमेए ॥ तो मुनिए मनविखवाद, नादजेद जिम उपनोए ॥ ४७ ॥ कूणसमोए सामीयदेखि, आपकन्हे हुं टालिउंए ॥ जाणतोए तिहुअणनाह, लोकविवहार न पालिउंए ॥ अतिजलुंए कीधलुं सामि, जाणीउं केवल मागसेए ॥ चिंतविउंए बालक जेम, अहवा केके लागसेए ॥ ४८ ॥ हुं किमए वीरजिणंद, जगते जोलो जोलविउंए ॥ आपणोए अविहल नेह, नाह न संपे साचव्यो ए ॥ साचो ए इह वीतराग, नेह न जेणे लालिउंए ॥ इणसमेए गोयमचित्त, रागवैरागे वालिउंए ॥ ४९ ॥ आवतोए जोउलट, रहेतोरागेसाहिउंए ॥ केवलए नाणउपन्न, गोयमसेहेजे उमाहिउंए ॥ त्रिजुवनए जयजयकार, केवल महिमा सुरकरेए ॥ गणधरुए करयवखाण, जवियण जव इम निस्तरेए ॥ ५० ॥ वस्तु छंद ॥ पढमगणहर पढमगणहर वरस पंचास, गिहिवासे संवसिय तीस वरिस संजमविजूसिय ॥ सिरिकेवल नाण पुण वारवरिस तिहुयण नमंसिय ॥ रायगिहिनयरिठविअबाणवइवरिसाउं ॥ सामि गोयमगुणनिलो होसे सिवपुर ठाउं ॥ ५१ ॥ षष्ठजाषा ॥ जिमसहकारे कोयल टहुके, जिम कुसुमवने परिमलबहके, जिम चंदन सुगंधनिधि ॥ जिम गंगाजल लहेरे हलके, जिम कणयाचल तेजे जलके, तिम गोयम सौजागनिधि ॥ ५२ ॥ जिम मानसरोवर निवसे हंसा, जिम सुरवरसिरिकणयवतंसा, जिम महुयरराजी ववनी ॥ जिम रयणायर रयणे विलसे, जिम अंबर तारागण विकसे, तिम गोयम गुणकेलिवनी ॥ ५३ ॥ पूनिमनिसि जिम ससिहर सोहे, सुरतरुमहिमा जिम जगमोहे ॥ पूरवदिसि जिम सहसकरो ॥ पंचानन जिम गिरिवर राजे, नरवइघर जिम मयगल गाजे, तिम जिनशासनमुनिपवरो ॥ ५४ ॥ जिम सुरतरुवर सोहे शाखा, जिम उत्तम मुख मधुरी जाखा, जिम वनकेतकीमहमहेए ॥ जिमजूमिपतिजुयबल चमके, जिम जिनमंदीर घंटारणके, तिम गोयमलब्धि गहगहेए ॥ ५५ ॥ चिंतामणि कर चढिउं आज, सुरतरु सारे वंछितकाज ॥ कामकुंज सवि वसहुआए ॥ कामगवीपूरेमनकामीय, अष्टमहासिद्धि आवे धामीय, सामिगोयम अणुसरोए ॥ ५६ ॥ पणवरकर पहेलो पजणीजे, मायावीजश्रवण निसुणीजे, श्रीमतीशोजा संजवेए ॥ देवहधुरिअरिहंत नमीजे ॥ विनयपहु उवझायथुणीजे, इण मंत्रे गोयम नमोए ॥ ५७ ॥ पुरपुरवसतां कांइ करीजे, देशदेशांतर कांइ जमीजे, कवण काज आयास करो ॥ प्रह उठी गोयम समरीजे, काज सुमंगल ततखण सीजे, नवनिधि विलसे तास घरो ॥ ५८ ॥ चउदहसयबारोत्तरवरसे, गोयम गणहर केवलदिवसे, "खंजनयरसिरिपासपसाये" कियुं कवित उपगारकरो ॥ आदे मंगल एह पजणीजे, पवर महोछव पहिलो कीजे, रिद्धिवृद्धिकल्लाणकरो ॥ ५९ ॥ धन्य माता जिणे उयरे धरिया, धन्य पिता जिण कुल अवतरिया, धन्य सहगुरु जिणे

दिक्षियाए ॥ विनयवंत विद्याजंमार, जसगुण पुह्वी न लाजेपार, वमजिम शाखाविस्तरोए ॥ ६० ॥ गौतमस्वामीनो रास जणीजे, चउविह संघ रलियायत कीजे, सकलसंघआणंदकरो ॥ कुंकुम चंदनछमो देवरावो, माणक मोतीना चोक पूरावो, रयणसिंहासण वेसणोए ॥ ६१ ॥ तिहां वेशी गुरु देशना देशे, जविकजीवना काज सरीशे, उदयवंतमुनि इम जणेए ॥ गौतमस्वामीतणो ए रास, जणता सुणता लीलविलास, सासय सुखनिधि संपजेए ॥ ६२ ॥ एह रास जे जणे जणावे, वरमंगल लच्छि घर आवे, मनवंछित आशा फलेए ॥ ६३ ॥ इति श्रीगौतमस्वामीनो रास संपूर्ण ॥

## ॥ अथ श्रीगौतम स्वामीनो लघुरास प्रारंजः ॥

॥ श्रीगौतमगुरु परजातधुरे, समरो जविकाजन चित्तधरे ॥ करकमलाकमलासुपरे, श्रीवीरजिनेश्वरशीशशिरे ॥ १ ॥ अष्टापद चढिआ लब्धिवले, जिनपमिमा वंदि अकलकले ॥ तापस पन्नरसें तिन्नमले, प्रतिबोध्या वयणरसे निश्चले ॥ २ ॥ अक्षीणमहानसी लब्धि घणी, पंचामृतपरिगल अन्नमुणि ॥ करिय पारणु वातवणी, केवलसिरिआवियतासजणी ॥ ३ ॥ जसशिरगौतम हाथ दिये, सोय केवलपदवी ताम लिये ॥ वाणीसुधारस जेह पिये, उत्तमफलसुगति तरत लिये, ॥ ४ ॥ प्रणवअक्षर पहिलो राजे, मायावीजमंत्र महिमाकाजे ॥ श्रीकरगौतम गुरुगुणगाजे, जपता जुगते संकट जाजे ॥ ५ ॥ कामधेनुसुरतरुसंगे, चिंतामणिचिंतितदे रंगे ॥ नामाक्षरगौतमचंगे, ध्याताहोयदिनप्रते सुखअंगे ॥ ६ ॥ इंद्रजूति जस नाम कहो, वसुजूति पिता तुह्मे चतुरलहो ॥ पृथ्वीमाता गुण सग्रहो, गौतमगुरुगोत्रीनी आणवहो ॥ ७ ॥ अरि करि हरि सवि वश थाए, वली रानवेलाउलसुजदाए ॥ रोग शोक आपद जाए, गौतमगुरुना जे गुण गाए ॥ ८ ॥ शाकण माकण दूर टले, वीछमियां प्रीतम आवी मले ॥ जूत प्रेत कवहीं न छले, गौतमनामे सवि आश फले ॥ ९ ॥ श्रीगौतमनामे रूपकला, गजरथ वरपावकहयसुजला ॥ ठामठाम जस मान जला, मृगनयणी गयगमणी महिला ॥ १० ॥ मृगमद चंदन वस्त्रधरे, सुतसोहग सुंदर सुजस वरे ॥ कंचन मणिमोतीय रयणजरे, गौतम नामे सव काज सरे ॥ ११ ॥ वचन विलास विद्या आवे, मनरुचतां जोजन सवि पावे ॥ दुःख दारिद्र कवहीं नावे, गौतमगुरु जस हियमे जावे ॥ १२ ॥ पाप सकल वेगे नासे, नितध्यान धरो मनउल्लासे ॥ श्रीगौतमगुरु पूजो वासे, गणीविजयशेखर कहे सुविलासे ॥ १३ ॥ इति श्रीगौतमस्वामीनो लघु रास संपूर्ण ॥

## ॥ अथ श्रीगौतमाष्टक छंद प्रारंजः ॥

चोपाइ ॥ वीरजिणेश्वरकेरो शिष्य, गौतम नाम जपो निशदीश ॥ जो कीजे गौतमनु ध्यान, तो घरविलसे नवे निधान ॥१॥ गौतमनामे गिरिवर चढे, मनवंछित हेला संपजे ॥ गौतमनामे नावे रोग, गौतमनामे सर्व संजोग ॥२॥ जे वैरीविरुआ वंकमा, जसनामे नावे ढुकमा ॥ जूत प्रेत नवि मंमे प्राण, ते गौतमना करु वखाण ॥३॥ गौतमनामे निर्मलकाय, गौतमनामे वाधे आय ॥ गौतम जिणशासनशिणगार, गौतमनामे जयजयकार ॥४॥ शाल

दालसुरहांघृतगोल, मनवंछितकापकतंबोल ॥ घरे सुघरणी निर्मलचित्त, गौतमनामे पुत्रविनीत ॥ ५ ॥ गौतम उदयो अविचल जाण, गौतमनाम जपो जगजाण ॥ मोटां मंदिर मेरुसमान, गौतमनामे सफल विहाण ॥ ६ ॥ घर मयगल घोमानी जोम, पहोचे वारु वंछितकोम ॥ महियसमानेमोहोटा राय, जो तूठे गौतमना पाय ॥ ७ ॥ गौतम प्रणम्यां पातिक टले, उत्तम नरनी संगति मले ॥ गौतमनामे निर्मलज्ञान, गौतमनामे वाधे वान ॥ ८ ॥ पुण्यवंत अवधारो सहु, गुरुगौतमना गुण छे बहु ॥ कहे लावण्यसमय कर जोम, गौतम तूठे संपत्त कोम ॥ ए ॥ इतिगौतमाष्टक संपूर्णं ॥

## ॥ अथ श्रीगौतमाष्टक प्रारंभः ॥

रागप्रभाती ॥ मातपृथ्वी सुत प्रात उठी नमो, गणधर गौतम नाम गेले । प्रहसमय प्रेमसुं जेह ध्यातां सदा, चढतीकला होय वंशवेले ॥ मात० ॥ १ ॥ वसुभूतिनंदन, विश्वजनवंदन, दुरितनिकंदननाम जेनुं, ॥ अभेदबुद्धेकरी भविजन जे भजे, पूर्ण पहोचे सहि भाग्य तेहनुं ॥ मात० ॥ २ ॥ सुरमणि जेहचिंतामणि सुरतरु, कामितपूरण कामधेनु ॥ तेह गौतमनुं ध्यान हृदये धरो, जेहथकी अधिक नहिं महात्म्य केनुं ॥ मात० ॥ ३ ॥ प्रणवआदे धरी मायाबीजेकरी, स्वमुखेगौतम नाम ध्याये ॥ कोमिमनकामना सफलवेगे फले, विघन वैरी सवे दूर जाये ॥ मात० ॥ ४ ॥ ज्ञानबल तेजस सकल सुखसंपदा, गौतमनामथी सिद्धि पामे ॥ अखंमप्रचंमप्रताप होय अवनिमां, सुरनर जेहने शीश नामे ॥ मात० ॥ ५ ॥ दुष्ट दूरे टले स्वजन मेलो मले, आधि उपाधि ने व्याधि नासे ॥ भूतनां प्रेतनां जोर भागे वली, गौतमनाम जपतां उल्लासे ॥ मात० ॥ ६ ॥ तीर्थ अष्टापदे आप लब्धे जइ, पन्नरसें त्रणने दीक्ष दीधी ॥ अठम पारणे तापस कारणे, क्षीर लब्धेकरी अखूटकीधी ॥ मात० ॥ ७ ॥ वरस पच्चासलगे गृहवासे वस्या, वरस वली त्रीश करी वीर सेवा ॥ वार वरसां लगे केवल भोगव्युं, भक्ति जेनी करे नित्य देवा ॥ मात० ॥ ८ ॥ महियलगौतमगोत्रमहिमा निधि, गुणनिधि रिसिने सिद्धिदायी ॥ उदय जस नामथी अधिक लीला लहे, सुजस सौभाग्य दोलत सवाइ ॥ मात० ॥ ए ॥ इति गौतमाष्टकं संपूर्ण ॥

## ॥ अथ श्रीगौतमस्तुति प्रारंभः ॥

श्रीइन्द्रभूतिं वसुभूतिपुत्रं, पृथ्वीभवं गौतमगोत्ररत्नं ॥ स्तुवंति देवासुरमानवेंद्राः, स गौतमो यच्छतु वांछितं मे ॥ १ ॥ श्रीवीरनाथेन पुरा प्रणीतं, मंत्रं महानंदसुखाय यस्य ॥ ध्यायंत्यमी सूरीविराः समग्राः, स गौतमो यच्छतु वांछितं मे ॥ २ ॥ श्रीवर्धमानात्रिपदीमवाप्य, मुहूर्त्तमात्रेण कृतानि येन ॥ अंगानि पूर्वाणि चतुर्दशापि, स गौतमः० ॥ ३ ॥ अष्टापदाद्रौ गगने स्वशक्त्या, ययौ जिनानां पदवंदनाय ॥ निशम्य तीर्थातिशयं सुरेभ्यः, स गौतमः० ॥ ४ ॥ त्रिपंचसंख्याशततापसानां, तपःकृशानामपुनर्भवाय ॥ अक्षीणलब्ध्या परमान्नदाता, स गौतमः० ॥ ५ ॥ सदक्षिणं भोजनमेव देयं, साधर्मिकं संघसपर्ययेति ॥ कैवल्यवस्त्रं प्रददौ मुनीनां, स गौतमः० ॥ ६ ॥ यस्याभिधानं मुनयोऽपि सर्वे, गृह्णंति भिक्षाभ्रमणस्य काले ॥ मिष्टान्नपानांवरपूर्णकामा, स गौतमः ॥ ७ ॥ शिवं गते

नंतरि वीरनाथे, युगप्रधानत्वमिहैव मत्वा ॥ पट्टाभिषेको विदधे सुरेंद्रैः, स गौतम.० ॥ ८ ॥ श्रीगौतमस्याष्टकमादरेण, प्रजातकाले मुनिपुंगवा ये ॥ पठंति ते सूरिपदं च देवानंदं लभंते नितरां क्रमेण ॥ ९ ॥ इति श्रीगौतमस्वामिस्तोत्रं समाप्तं ॥

## ॥ अथ श्रीगौतमस्वामिस्तोत्र प्रारंभ ॥

॥ शार्दूलविक्रीडितं वृत्तं ॥ स्वर्णाष्टाग्रसहस्रपत्रकमले पद्मासनस्थं मुनिं, स्फूर्जल्लब्धिविभूषित गणधरं श्रीगौतमस्वामिनं ॥ देवेंद्राद्यमरावलीविरचितोपास्तिं समस्ताद्भुवः, श्रीवासातिशयप्रभापरिगतं ध्यायामि योगीश्वरं ॥ १ ॥ किं दुग्धाबुधिगर्भगौरसलिलैः शंखोपलातर्दलैः, किं किं श्वेतसरोजपुंजरुचिभिः किं ब्रह्मरोचिकणैः ॥ किं शुभ्रसितपिंककैश्चघटिता किं केवला चामृतै—र्मूर्तिस्ते गणनाथगौतम हृदि ध्यानाधिदेवी मम ॥ २ ॥ श्रीखंडादिपदार्थसार्थकणिका किं वर्त्तयित्वा सता, किं चेतांसि यशांसि किं गणभृता निर्यास्यतद्वाक्सुधा ॥ स्थानीकृत्य किमप्रमत्तकमुनेः सौख्यानि सचूर्ण्य किं, मूर्तिस्ते विदधे ममस्मृतिपथाऽधिष्ठायिनी गौतम ॥ ३ ॥ नीरागस्य तपस्विनोऽद्भुतसुखव्रातादृहित्वा दलं, तस्याप्यब्रशमाबुधेरसतरं श्रीजैनमूर्त्तेर्मह ॥ तस्या एव हि रामणियकगुणं सौभाग्यभाग्योद्भव, मल्लानाबुजहंसिका मुनिकृता मूर्त्तिः प्रभो तेऽमला ॥ ४ ॥ किं ध्यानानलगालितैः शुचिदलैरासाभिसद्भावना—ऽमोदूधृष्ट. किमु शीलचंदनरसैरालेऽपिमूर्तिस्तव ॥ सम्यग्दर्शनपारदैः किमु तप.शुद्धैरसोधि प्रभो, मच्चित्ते दमिते जिनैः किमु शमेन्दुभावतश्चाघटी ॥ ५ ॥ किं विश्वोपकृतिक्षमोद्यममयी किं पुण्यपेटीमयी, किं वात्सल्यमयी किमुत्सवमयी पावित्र्यपिंडिमयी ॥ किं कल्पद्रुमयी मरुन्मणिमयी किं कामदोग्ध्रीमयी, या धत्ते तव नाथ मे हृदितत: का कांतरूपश्रियं ॥६॥ किं कर्पूरमयी सुचंदनमयी पीयूषतेजोमयी, किं चूर्णीकृतचन्द्रमंडलमयी किं भद्रलक्ष्मीमयी ॥ किं वाऽऽनंदमयी कृपारसमयी किं साधुमुद्रामयी—त्यंतर्मे हृदिनाथ मूर्तिरमला नो भाति किं किं मयी ॥७॥ अत.सारमपामुपास्य किमु किं प्रार्थ्यव्रताना रसं, सौभाग्यं किमु कामनीयसुगुणश्रेणेर्मुपित्वा च किं ॥ सर्वस्वंशमशीतगो शुभरुचेरोज्ज्वल्यमाछिद्य किं, जाता मे हृदि योगमार्गपथिकी मूर्तिःप्रभो तेऽमला ॥८॥ ब्रह्मांडोदरपूरणाधिकयश:कर्पूरपारीरज:, पुंभिःकिं धवलीकृता तव ननु मेध्यानसद्मस्थिता ॥ किं शुभ्रसितमुक्तैर्हृतदल:दुःकर्मकुंभस्थर., ध्यानाद्यामृतवेणिभि:प्लुततरा श्रीगौतमो भ्राजते ॥९॥ किं त्रैलोक्यरमाकटाक्षलहरीलीलाभिरालिंगिता, किं चोत्पन्नकृपासमुद्गमकरोद्गारोत्करंवीकृता ॥ किं ध्यानानलदह्यमाननिखिलात कष्टकष्टावली, रक्षाभि र्धवलीकृता मम हृदि श्रीगौतम त्वन्नु ॥ १० ॥ उच्च ध्यानसुधासमुद्रलहरीचूलाचलांदोलन—क्रीडानिश्चलरोचिरुज्ज्वलवपु श्रीगौतमो मे हृदि ॥ भित्वा मोहकपाटसंपुटमिति प्रोल्लासितात स्फुर—ज्ज्योतिर्मुक्तिनितंबिनी नयतु मां स ब्रह्मतामात्मन: ॥ ११ ॥ श्रीमद्गौतमपादवंदनरुचि श्रीवाङ्मयस्वामिनी, मर्त्यक्षेत्रनगेश्वरी त्रिभुवनस्य स्वामिनी श्रीमती ॥ तेजोराशिरुदासविंशतिभुजोयक्षाधिप:श्रीसुरा—धीशा शासनदेवताश्च ददता श्रेयांसि भूयांसि न ॥ १२ ॥ ॥ इति श्रीगौतमस्वामिन स्तवन संपूर्ण ॥

## ॥ अथ श्रीगौतमगुरुनी चोपाइ प्रारंभः ॥

॥ जयो जयो गौतमगणधार, मोटी लब्धितणो भंमार । समरे वंछितसुखदातार, जयो जयो गौतम गणधार ॥ १ ॥ वीर वजीर वमो अणगार, चौद हजार मुनि शिरदार ॥ जपतां नाम होय जयकार, जयो जयो गौतम गणधार ॥ २ ॥ गयगमणी रमणी जगिसार, पुत्र कलत्र सजन परिवार ॥ आवे कनककोमीविस्तार, जयो जयो गौतम गणधार ॥ ३ ॥ घरे घोमा पायक नहि पार, सुखासन पालखी उदार ॥ वयरीविकट थाए विसराज, जयो जयो गोतम गणधार ॥४॥ प्रह उठी जपीये गणधार, ऋद्धिसिद्धिकमलादातार ॥ रुपरेखमयणअवतार, जयो जयो गौतम गणधार ॥ ५ ॥ कविरूपचंदगणिकेरोशिष्य, गौतमगुरु प्रणमे निशदिश ॥ कहे चंद ए सुमतागार, जयो जयो गौतम गणधार ॥ ६ ॥ इति गौतमगुरुनी चोपाइ संपूर्ण ॥

## ॥ अथ गणधरस्तवन प्रारंभः ॥

॥ एकादश गणधरनां नाम, प्रह उठीने करुं प्रणाम ॥ इंद्रभूति पहेलो ते जाण, अग्निभूति बीजो गुणखाण ॥ १ ॥ वायुभूति त्रीजो जगसार, गणधर चोथो व्यक्तउदार ॥ शासनपति सुधर्मासार, मंमित नामे छठो धार ॥ २ ॥ मौर्यपुत्र ते सातमोजेह, अकंपित अष्टम गुणगेह ॥ मुनिवरमांहे जे परधान, अचलभ्रात नवमो ए नाम ॥ ३ ॥ नामथकी होय कोमीकल्याण, दशमो मेतारज अविरल वाण ॥ एकादशमो प्रभास कहेवाय, सुखसंपत्ति जसनामेथाय ॥ ४ ॥ गाया वीरतणा गणधार, गुणमणिरयणतणा भंमार ॥ उत्तमविजयगुरुनो शिष्य, रत्नविजय वंदे निसदिश ॥ ५ ॥ इति गणधरस्तवनसमाप्तः ॥

## ॥ अथ श्रीप्रभातसमये मंगलाचार प्रारंभः ॥

॥ श्लोक ॥ मंगलं भगवान् वीरो, मंगलं गौतमः प्रभुः ॥ मंगलं स्थूलभद्राद्या, जैनो धर्मोऽस्तु मंगलं ॥ १ ॥ सर्वारिष्टप्रणाशाय, सर्वाभिष्टार्थदायिने ॥ सर्वलब्धिनिधानाय, गौतमस्वामिने नमः ॥ २ ॥ अक्षीणमहानसीलब्धि, केवलश्रीकरांबुजे ॥ नामलक्ष्मी मुखेवाणी, तमहं गौतमं स्तवे ॥ ३ ॥ दोहरा ॥ एक जंबू जग जाणीये, बीजा नेमकुमार ॥ त्रीजा वयर वखाणीये, चोथा गौतमस्वाम ॥१॥ अंगुठे अमृत वसे, लब्धितणो भंमार ॥ ते गौतमगुरु समरीये, वांछित फल दातार ॥२॥ पुंमरिकगौयमपमुह, गणहर गुणसंपन्न ॥ प्रह उठी नित्य प्रणमीये, चउदहसें बावन्न ॥ ३ ॥ बोरस किमरस किंनरस, चोथा जसोभद्रसूरि ॥ त्रिणे काले समरतां, डुरिय पणासे दूरि ॥ ४ ॥ जे चारित्रे निर्मला, ते पंचायणसिंह ॥ विषयकषायने गंजिया, ते समरो निशदिह ॥ ५ ॥ गामतणे पैसारणे, गौतम गुरुसमरंत ॥ इच्छाभोजनघरकुशल, लच्छिलीलकरंत ॥ ६ ॥ ॥ इति मंगलाचारसमाप्तः ॥

## ॥ अथ सरस्वतीस्तोत्र प्रारंभः

॥ नमस्ते सारदे देवि, कास्मिरपुरवासिनी ॥ त्वामहं प्रथमे नाथे, विद्यादानं प्रदेहि मे ॥ १ ॥ प्रथमं भारती नाम, द्वितीयं च सरस्वती ॥ तृतीयं शारदा देवी, चतुर्थं हंसगामिनी

